विशेषेण च वक्ष्यामि चातुर्वर्ण्यस्य लिङ्गतः ।
पञ्चभूतशरीराणां सर्वेषां सदृशात्मनाम्॥ ११
लोकधर्मे च धर्मे च विशेषकरणं कृतम् ।
यथैकत्वं पुनर्यान्ति प्राणिनस्तत्र विस्तरः १२
अध्रुवो हि कथं लोकः स्मृतो धर्मः कथं ध्रुवः
यत्र कालो ध्रुवस्तात तत्र धर्मः सनातनः १३
सर्वेषां तुल्यदेहानां सर्वेषां सदृशात्मनाम् ।
कालो धर्मेण संयुक्तः शेष एव स्वयं गुरुः १४
एवं सति न दोषोऽस्ति भूतानां धर्मसेवने ।
तिर्यग्योनावपि सतां लोक एव मतो गुरुः १५

इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मपर्वणि धर्मप्रशंसायां
चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

## १६५

वैशम्पायन उवाच ।
शरतल्पगतं भीष्मं पाण्डवोऽथ कुरूद्वहः ।
युधिष्ठिरो हितं प्रेप्सुरपृच्छत्कल्मषापहम् ॥ १
युधिष्ठिर उवाच ।
किं श्रेयः पुरुषस्येह किं कुर्वन्सुखमेधते ।
विपाप्मा स भवेत्केन किं वा कल्मषनाशनम्
वैशम्पायन उवाच ।
तस्मै शुश्रूषमाणाय भूयः शान्तनवस्तदा ।
दैवं वंशं यथान्यायमाचष्ट पुरुषर्षभ ॥ ३
भीष्म उवाच ।
अयं दैवतवंशो वै ऋषिवंशसमन्वितः ।
त्रिसन्ध्यं पठितः पुत्र कल्मषापहरः परः ॥ ४
यदह्ना कुरुते पापमिन्द्रियैः पुरुषश्चरन् ।
बुद्धिपूर्वमबुद्धिर्वा रात्रौ यच्चापि सन्ध्ययोः ५
मुच्यते सर्वपापेभ्यः कीर्तयन्वै शुचिः सदा ।
नान्धो न बधिरः काले कुरुते स्वस्तिमान्सदा
तिर्यग्योनिं न गच्छेच्च नरकं सङ्कराणि च ।
न च दुःखभयं तस्य मरणे स न मुह्यति ॥ ७
देवासुरगुरुर्देवः
सर्वभूतनमस्कृतः ।
अचिन्त्योऽथाप्यनिर्देश्यः
सर्वप्राणो ह्ययोनिजः ॥ ८
पितामहो जगन्नाथः सावित्री ब्रह्मणः सती ।
वेदभूरथ कर्ता च विष्णुर्नारायणः प्रभुः ॥ ९
उमापतिर्विरूपाक्षः स्कन्दः सेनापतिस्तथा ।
विशाखो हुतभुग्वायुश्चन्द्रसूर्यौ प्रभाकरौ॥१०
शक्रः शचीपतिर्देवो यमो धूमोर्णया सह ।
वरुणः सह गौर्या च सह ऋद्ध्या धनेश्वरः११
सौम्या गौः सुरभिर्देवी विश्रवाश्च महानृषिः
सङ्कल्पः सागरो गङ्गा स्रवन्त्योऽथ मरुद्गणः॥
वालखिल्यास्तपःसिद्धाः कृष्णद्वैपायनस्तथा
नारदः पर्वतश्चैव विश्वावसुर्हहाहुहूः ॥ १२

---

विशेषेणेति युग्मं सर्वेषां प्राणिनां पुरुषाणां वा पाञ्चभौतिकत्वे प्रत्यक्षेऽपि विशेषकरणं इदं पवित्रमिदमपवित्रमिति व्यवस्थापनं लोकधर्मे शास्त्रीयधर्मे च निमित्ते सति कृतम् । पशुपामरपण्डितानां यथा पुनर्विहितेनैते एकत्वं प्राकृतं गच्छेयुरिति शास्त्रेण धर्मनियमः कृत इत्यर्थः ॥११॥ अत्र शङ्कते–**अध्रुव इति**। लोकस्य धर्मस्य च कार्यकारणभावात्कार्यस्याध्रुवत्वं कारणस्य ध्रुवत्वं च न युक्तं तन्तुनाशमन्तरेण पटनाशायोगादित्यर्थः । उत्तरमाह—**कालः** सङ्कल्पः निष्कामधर्म एव ध्रुवस्तत्फलं न तु सकाम इत्यर्थः ॥ १३ ॥ **सर्वेषामिति**। धर्मसंयुक्तः सङ्कल्प एव शेषः शिष्यते नान्यः । स च कथमुदेष्यतीत्यत्राह—**स्वयं गुरुरिति**। धर्मबलात्स्वयमेव च स उदेति न शिक्षयेदित्यर्थः ॥ १४ ॥ **एवमिति**। यदा भूतानां प्राक्कर्मैव तत्र तत्र सुखदुःखसाधने प्रवर्तकं अतो धर्मसेवने कर्मफलभोगे असमञ्जसेऽपि भूतानां दोषो नास्ति । यतः तिर्यग्योनावपि सतां विद्यमानानां भूतानां सदसत्प्रवृत्तौ पूर्वकर्मानुसाराल्लोक एव गुरुर्दृष्टः । विधिनियंत्रितो लोकदृष्टान्तेनैव साधुन्यसाधुनि वा कर्मणि प्रवर्तते इत्यर्थः ॥ १५ ॥ इति श्रीमहाभारते अनुशासनपर्वणि नैलकण्ठीये भारतभावदीपे चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

१६५

**शरतल्पगतमि**त्यध्यायद्वयं स्पष्टार्थम् ॥ १ ॥

तुम्बुरुश्चित्रसेनश्च देवदूतश्च विश्रुतः ।
देवकन्या महाभागा दिव्याश्चाप्सरसां गणाः
उर्वशी मेनका रंभा मिश्रकेशी ह्यलंबुषा ।
विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा
आदित्या वसवो रुद्राः साश्विनः पितरोपि च
धर्मः श्रुतं तपो दीक्षा व्यवसायः पितामहः॥
शर्वर्यो दिवसाश्चैव मारीचः कश्यपस्तथा ।
शुक्रो बृहस्पतिर्भौमो बुधो राहुः शनैश्चरः ॥
नक्षत्राण्यृतवश्चैव मासाः पक्षाः सवत्सराः ।
वैनतेयाः समुद्राश्च कद्रुजाः पन्नगास्तथा १८
शतद्रुश्च विपाशा च चन्द्रभागा सरस्वती ।
सिन्धुश्च देविका चैव प्रभासं पुष्कराणि च ॥
गङ्गा महानदी वेणा कावेरी नर्मदा तथा ।
कुलंपुना विशल्या च करतोयांबुवाहिनी २०
सरयूर्गण्डकी चैव लोहितश्च महानदः ।
ताम्राऽरुणा वेत्रवती पर्णाशा गौतमी तथा॥
गोदावरी च वेण्या च कृष्णवेणा तथाऽद्रिजा
दृषद्वती च कावेरी चक्षुर्मन्दाकिनी तथा २२
प्रयागं च प्रभासं च पुण्यं नैमिषमेव च ।
तच्च विश्वेश्वरस्थानं यत्र तद्विमलं सरः ॥ २३
पुण्यतीर्थं सुसलिलं कुरुक्षेत्रं प्रकीर्तितम् ।
सिन्धूत्तमं तपोदानं जंबूमार्गमथापि च ॥ २४
हिरण्वती वितस्ता च तथा प्लक्षवती नदी ।
वेदस्मृतिर्वेदवती मालवाथाश्ववत्यपि ॥ २५
भूमिभागास्तथा पुण्या गङ्गाद्वारमथापि च ।
ऋषिकुल्यास्तथा मेध्या नद्यः सिंधुवहास्तथा
चर्मण्वती नदी पुण्या कौशिकी यमुना तथा।
नदी भीमरथी चैव बाहुदा च महानदी ॥ २७
माहेन्द्रवाणी त्रिदिवा नीलिका च सरस्वती।
नन्दा चापरनन्दा च तथा तीर्थमहाह्रदः २८
गयाऽथ फल्गुतीर्थं च धर्मारण्यं सुरैर्वृतम् ।
तथा देवनदी पुण्या सरश्च ब्रह्मनिर्मितम् २९
पुण्यं त्रिलोकविख्यातं सर्वपापहरं शिवम् ।
हिमवान्पर्वतश्चैव दिव्यौषधिसमन्वितः॥ ३०
विंध्यो धातुविचित्राङ्गस्तीर्थवानौषधान्वितः
मेरुर्महेन्द्रो मलयः श्वेतश्च रजतावृतः ॥ ३१
शृङ्गवान्मन्दरो नीलो निषधो दर्दुरस्तथा ।
चित्रकूटोऽजनाभश्च पर्वतो गन्धमादनः ३२
पुण्यः सोमगिरिश्चैव तथैवान्ये महीधराः ।
दिशश्च विदिशश्चैव क्षितिः सर्वे महीरुहाः ३३
विश्वेदेवा नभश्चैव नक्षत्राणि ग्रहास्तथा ।

पांतु नः सततं देवाः कीर्तिताऽकीर्तिता मया
कीर्तयानो नरो ह्येतान्मुच्यते सर्वकिल्बिषैः ।
स्तुवंश्च प्रतिनन्दंश्च मुच्यते सर्वतो भयात् ३५
सर्वसङ्करपापेभ्यो देवतास्तवनंदकः ।
देवतानन्तरं विप्रांस्तपःसिद्धांस्तपोधिकान्
कीर्तितान्कीर्तयिष्यामि सर्वपापप्रमोचनान्
यवक्रीतोऽथ रैभ्यश्च कक्षीवानौशिजस्तथा
भृग्वाङ्गिरास्तथा कण्वो मेधातिथिरथ प्रभुः ।
बर्हीं च गुणसम्पन्नः प्राचीं दिशमुपाश्रिताः३८
भद्रां दिशं महाभागा उल्मुचुः प्रमुचुस्तथा ।
मुमुचुश्च महाभागः स्वस्त्यात्रेयश्च वीर्यवान्३९
मित्रावरुणयोः पुत्रस्तथाऽगस्त्यः प्रतापवान्
दृढायुश्चोर्ध्वबाहुश्च विश्रुतावृषिसत्तमौ ॥ ४०
पश्चिमां दिशमाश्रित्य य एधंते निबोध तान्
उषंगुः सह सोदर्यैः परिव्याधश्च वीर्यवान् ४१
ऋषिर्दीर्घतमाश्चैव गौतमः काश्यपस्तथा ।
एकतश्च द्वितश्चैव त्रितश्चैव महानृषिः ॥ ४२
अत्रेः पुत्रश्च धर्मात्मा तथा सारस्वतः प्रभुः ।
उत्तरां दिशमाश्रित्य य एधन्ते निबोध तान् ॥
अत्रिर्वसिष्ठः शक्तिश्च पाराशर्यश्च वीर्यवान् ।
विश्वामित्रो भरद्वाजो जमदग्निस्तथैव च ४४
ऋचीकपुत्रो रामश्च ऋषिरौद्दालकिस्तथा ।
श्वेतकेतुः कोहलश्च विपुलो देवलस्तथा ४५
देवशर्मा च धौम्यश्च हस्तिकाश्यप एव च ।
लोमशो नाचिकेतश्च लोमहर्षण एव च ४६
ऋषिरुग्रश्रवाश्चैव भार्गवश्च्यवनस्तथा ॥
एष वै समवायश्च ऋषिदेवसमन्वितः ॥ ४७
आद्यः प्रकीर्तितो राजन्सर्वपापप्रमोचनः ।
नृगो ययातिर्नहुषो यदुः पूरुश्च वीर्यवान् ४८
धुंधुमारो दिलीपश्च सगरश्च प्रतापवान् ।
कृशाश्वो यौवनाश्वश्च चित्राश्वः सत्यवांस्तथा
दुष्यन्तो भरतश्चैव चक्रवर्ती महायशाः ।
पवनो जनकश्चैव तथा दृष्टरथो नृपः ५०
रघुर्नरवरश्चैव तथा दशरथो नृपः ।
रामो राक्षसहा वीरः शशबिन्दुर्भगीरथः ५१
हरिश्चन्द्रो मरुत्तश्च तथा दृढरथो नृपः ।
महोदर्यो ह्यलर्कश्च ऐलश्चैव नराधिपः ॥ ५२
करंधमो नरश्रेष्ठः कध्मोरश्च नराधिपः ।
दक्षोऽम्बरीषः कुकुरो रैवतश्च महायशाः ॥ ५३

कुरुः संवरणश्चैव मांधाता सत्यविक्रमः ।
मुचुकुन्दश्च राजर्षिर्जह्नुर्जाह्नविसेवितः ॥ ५४
आदिराजः पृथुर्वैन्यो मित्रभानुः प्रियङ्करः ।
त्रसद्दस्युस्तथा राजा श्वेतो राजर्षिसत्तमः ५५
महाभिषश्च विख्यातो निमिराजा तथाऽष्टकः
आयुः क्षुपश्च राजर्षिः कक्षेयुश्च नराधिपः ५६
प्रतर्दनो दिवोदासः सुदासः कोसलेश्वरः ।
पेलो नलश्च राजर्षिर्मनुश्चैव प्रजापतिः ॥ ५७
हविध्रश्च पृषध्रश्च प्रतीपः शांतनुस्तथा ।
अजः प्राचीनबर्हिश्च तथेक्ष्वाकुर्महायशाः ५८
अनरण्यो नरपतिर्जानुजंघस्तथैव च ।
कक्षसेनश्च राजर्षिर्ये चान्ये चानुकीर्तिताः५९
कल्यमुत्थाय यो नित्यं संध्ये द्वेऽस्तमयोदये
पठेच्छुचिरनावृत्तः स धर्मफलभाग्भवेत् ६०
देवा देवर्षयश्चैव स्तुता राजर्षयस्तथा ।
पुष्टिमायुर्यशः स्वर्गं विधास्यन्ति ममेश्वराः
मा विघ्नं मा च मे पापं मा च मे परिपंथिनः
ध्रुवो जयो मे नित्यः स्यात्परत्र च शुभा गतिः

इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मपर्वणि वंशानुकीर्तनं नाम पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

## १६६

जनमेजय उवाच ।
शरतल्पगते भीष्मे कौरवाणां धुरंधरे ।
शयाने वीरशयने पांडवैः समुपस्थिते ॥ १
युधिष्ठिरो महाप्राज्ञो मम पूर्वपितामहः ।
धर्माणामागमं श्रुत्वा विदित्वा सर्वसंशयान्
दानानां च विधिं श्रुत्वा छिन्नधर्मार्थसंशयः
यदन्यदकरोद्विप्र तन्मे शंसितुमर्हसि ॥ ३
वैशम्पायन उवाच ।
अभून्मुहूर्तं स्तिमितं सर्वं तद्राजमण्डलम् ।
तूष्णींभूते ततस्तस्मिन्पटे चित्रमिवार्पितम् ४
मुहूर्तमिव च ध्यात्वा व्यासः सत्यवतीसुतः
नृपं शयानं गाङ्गेयमिदमाह वचस्तदा ॥ ५
राजन्प्रकृतिमापन्नः कुरुराजो युधिष्ठिरः ।
सहितो भ्रातृभिः सर्वैः पार्थिवैश्चानुयायिभिः
उपास्ते त्वां नरव्याघ्र सह कृष्णेन धीमता ।
तमिमं पुरयानाय समनुज्ञातुमर्हसि ॥ ७
एवमुक्तो भगवता व्यासेन पृथिवीपतिः ।
युधिष्ठिरं सहामात्यमनुजज्ञे नदीसुतः ॥ ८
उवाच चैनं मधुरं नृपं शांतनवो नृपः ।
प्रविशस्व पुरीं राजन्व्येतु ते मानसो ज्वरः॥९
यजस्व विविधैर्यज्ञैर्बह्वन्नैः स्वाप्तदक्षिणैः ।
ययातिरिव राजेन्द्र श्रद्धादमपुरःसरः ॥ १०
क्षत्रधर्मरतः पार्थ पितॄन्देवांश्च तर्पय ।
श्रेयसा योक्ष्यसे चैव व्येतु ते मानसो ज्वरः
रञ्जयस्व प्रजाः सर्वाः प्रकृतीः परिसांत्वय ॥
सुहृदः फलसत्कारैरर्चयस्व यथार्हतः ॥ १२
अनु त्वां तात जीवंतु मित्राणि सुहृदस्तथा ।
चैत्यस्थाने स्थितं वृक्षं फलवन्तमिव द्विजाः
आगन्तव्यं च भवता समये मम पार्थिव ।
विनिवृत्ते दिनकरे प्रवृत्ते चोत्तरायणे १४
तथेत्युक्त्वा च कौंतेयः सोभिवाद्य पितामहम्
प्रययौ सपरीवारो नगरं नागसाह्वयम् ॥ १५
धृतराष्ट्रं पुरस्कृत्य गांधारीं च पतिव्रताम् ।
सह तैर्ऋषिभिः सर्वैर्भ्रातृभिः केशवेन च १६
पौरजानपदैश्चैव मन्त्रिवृद्धैश्च पार्थिव ।
प्रविवेश कुरुश्रेष्ठः पुरं वारणसाह्वयम् ॥ १७

इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मपर्वणि भीष्मानुज्ञायां षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

॥ समाप्तमानुशासनिकं पर्व ॥

इति श्रीमहाभारते अनुशासनपर्वणि नैलकण्ठीये भारतभावदीपे पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

१६६

शरतल्पगत इति ॥ १ ॥ इति श्रीमहाभारते अनुशासनपर्वणि नैलकण्ठीये भारतभावदीपे षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

# भीष्मस्वर्गारोहणपर्व २

## १६७

वैशम्पायन उवाच ।
ततः कुंतीसुतो राजा पौरजानपदं जनम् ।
पूजयित्वा यथान्यायमनुजज्ञे गृहान्प्रति ॥ १
सान्त्वयामास नारीश्च हतवीरा हतेश्वराः ।
विपुलैरर्थदानैः स तदा पाण्डुसुतो नृपः ॥ २
सोभिषिक्तो महाप्राज्ञः प्राप्य राज्यं युधिष्ठिरः
अवस्थाप्य नरश्रेष्ठः सर्वाः स्वप्रकृतीस्तथा ॥ ३
द्विजेभ्यो गुणमुख्येभ्यो नैगमेभ्यश्च सर्वशः ।
प्रतिगृह्याशिषो मुख्यास्तथा धर्मभृतां वरः ॥ ४
उषित्वा शर्वरीः श्रीमान्पञ्चाशन्नगरोत्तमे ।
समयं कौरवाग्र्यस्य सस्मार पुरुषर्षभः ॥ ५
स निर्ययौ गजपुराद्याजकैः परिवारितः ।
दृष्ट्वा निवृत्तमादित्यं प्रवृत्तं चोत्तरायणम् ॥ ६
घृतं माल्यं च गन्धांश्च क्षौमाणि च युधिष्ठिरः
चन्दनागुरुमुख्यानि तथा कालीयकान्यपि ॥ ७
प्रस्थाप्य पूर्वं कौन्तेयो भीष्मसंस्करणाय वै
माल्यानि च वरार्हाणि रत्नानि विविधानि च
धृतराष्ट्रं पुरस्कृत्य गान्धारीं च यशस्विनीम्
मातरं च पृथां धीमान्भ्रातॄंश्च पुरुषर्षभान् ॥ ९
जनार्दनेनानुगतो विदुरेण च धीमता ।
युयुत्सुना च कौरव्यो युयुधानेन वा विभो ॥
महता राजभोगेन पारिबर्हेण संवृतः ।
स्तूयमानो महातेजा भीष्मस्याग्नीननुव्रजन्
निश्चक्राम पुरात्तस्माद्यथा देवपतिस्तथा ॥
आससाद कुरुक्षेत्रे ततः शान्तनवं नृपः ॥ १२
उपास्यमानं व्यासेन पाराशर्येण धीमता ।
नारदेन च राजर्षे देवलेनासितेन च ॥ १३
हतशिष्टैर्नृपैश्चान्यैर्नानादेशसमागतैः ।
रक्षिभिश्च महात्मानं रक्ष्यमाणं समंततः ॥ १४
शयानं वीरशयने ददर्श नृपतिस्ततः ।
ततो रथादवातीर्य भ्रातृभिः सह धर्मराट् १५
अभिवाद्याथ कौन्तेयः पितामहमरिन्दम ।
द्वैपायनादीन्विप्रांश्च तैश्च प्रत्यभिनन्दितः ॥ १६

ऋत्विग्भिर्ब्रह्मकल्पैश्च भ्रातृभिः सह धर्मजः ।
आसाद्य शरतल्पस्थमृषिभिः परिवारितम् ॥
अब्रवीद्भरतश्रेष्ठं धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सह कौरव्यः शयानं निम्नगासुतम्
युधिष्ठिरोऽहं नृपते नमस्ते जाह्नवीसुत ।
शृणोषि चेन्महाबाहो ब्रूहि किं करवाणि ते
प्राप्तोऽस्मि समये राजन्नग्नीनादाय ते विभो ।
आचार्यान्ब्राह्मणांश्चैव ऋत्विजो भ्रातरश्च मे
पुत्रश्च ते महातेजा धृतराष्ट्रो जनेश्वरः ।
उपस्थितः सहामात्यो वासुदेवश्च वीर्यवान् ॥
हतशिष्टाश्च राजानः सर्वे च कुरुजांगलाः ।
तान्पश्य नरशार्दूल समुन्मीलय लोचने ॥ २२
यच्चेह किंचित्कर्तव्यं तत्सर्वं प्रापितं मया ।
यथोक्तं भवता काले सर्वमेव च तत्कृतम् २३
वैशम्पायन उवाच ।
एवमुक्तस्तु गाङ्गेयः कुन्तीपुत्रेण धीमता ।
ददर्श भारतान्सर्वान्स्थितान्संपरिवार्य ह २४
ततश्च तं बली भीष्मः प्रगृह्य विपुलं भुजम् ।
उद्यन्मेघस्वरो वाग्मी काले वचनमब्रवीत ॥
दिष्ट्या प्राप्तोऽसि कौन्तेय
सहामात्यो युधिष्ठिर ।
परिवृत्तो हि भगवान्
सहस्रांशुर्दिवाकरः ॥ २६
अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गताः ।
शरेषु निशिताग्रेषु यथा वर्षशतं तथा ॥ २७
माघोऽयं समनुप्राप्तो मासः सौम्यो युधिष्ठिर
त्रिभागशेषः पक्षोऽयं शुक्लो भवितुमर्हति २८
एवमुक्त्वा तु गाङ्गेयो धर्मपुत्रं युधिष्ठिरम् ।
धृतराष्ट्रमथामन्त्र्य काले वचनमब्रवीत ॥ २९
भीष्म उवाच ।
राजन्विदितधर्मोऽसि सुनिर्णीतार्थसंशयः ।
बहुश्रुता हि ते विप्रा बहवः पर्युपासिताः ३०

---

१६७

तत इति ॥१॥ भीष्मस्याग्नीनिति तेन तस्यापि पत्नी आसीत् यद्वा संस्कारकानग्नीन् ॥११॥ माघोऽयमिति सौम्यश्चान्द्रः मासस्य चतुर्भागकरणे सार्धसप्ततिर्भागत्वात् अष्टम्यर्धस्यानतीतत्वेन प्रथमभागस्य विद्यमानत्वात् त्रिभागशेषो भवितुमर्हतीत्यर्थः । तेनाद्याष्टमीत्यर्थः ॥ २८ ॥

वेदशास्त्राणि सर्वाणि धर्मांश्च मनुजेश्वर।
वेदांश्च चतुरः सर्वान्निखिलेनानुबुध्यसे ॥ ३१
न शोचितव्यं कौरव्य भवितव्यं हि तत्तथा ।
श्रुतं देवरहस्यं ते कृष्णद्वैपायनादपि ॥ ३२
यथा पाण्डोः सुता राजंस्तथैव तव धर्मतः ।
तान्पालय स्थितो धर्मे गुरुशुश्रूषणे रतान् ॥३३
धर्मराजो हि शुद्धात्मा निदेशे स्थास्यते तव ।
आनृशंस्यपरं ह्येनं जानामि गुरुवत्सलम् ३४
तव पुत्रा दुरात्मानः क्रोधलोभपरायणाः ।
ईर्ष्याभिभूता दुर्वृत्तास्तान्न शोचितुमर्हसि ३५

वैशम्पायन उवाच ।

एतावदुक्त्वा वचनं धृतराष्ट्रं मनीषिणम् ।
वासुदेवं महाबाहुमभ्यभाषत कौरवः ॥ ३६

भीष्म उवाच ।

भगवन्देवदेवेश सुरासुरनमस्कृत ।
त्रिविक्रम नमस्तुभ्यं शङ्खचक्रगदाधर ॥ ३७
वासुदेवो हिरण्यात्मा पुरुषः सविता विराट्
जीवभूतोऽनुरूपस्त्वं परमात्मा सनातनः ३८
त्रायस्व पुण्डरीकाक्ष पुरुषोत्तम नित्यशः ।
अनुजानीहि मां कृष्ण वैकुण्ठ पुरुषोत्तम ॥३९
रक्ष्याश्च ते पाण्डवेया भवान्येषां परायणम् ।
उक्तवानस्मि दुर्बुद्धिं मन्दं दुर्योधनं तदा ४०
'यतः कृष्णस्ततो धर्मो' यतो धर्मस्ततो जयः।
वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः ॥४१
सन्धानस्य परः कालस्तवेति च पुनः पुनः ।
न च मे तद्वचो मूढः कृतवान्स सुमन्दधीः ।
घातयित्वेह पृथिवीं ततः स निधनं गतः ४२
त्वां तु जानाम्यहं देवं पुराणमृषिसत्तमम् ।
नरेण सहितं देव बदर्यां सुचिरोषितम् ॥ ४३
तथा मे नारदः प्राह व्यासश्च सुमहातपाः ।
नरनारायणावेतौ संभूतौ मनुजेष्विति ॥ ४४
स मां त्वमनुजानीहि कृष्ण मोक्ष्ये कलेवरम्
त्वयाऽहं समनुज्ञातो गच्छेयं परमां गतिम् ॥

वासुदेव उवाच ।

अनुजानामि भीष्म त्वां वसून्प्राप्नुहि पार्थिव
न तेऽस्ति वृजिनं किंचिदिहलोके महाद्युते
पितृभक्तोऽसि राजर्षे मार्कण्डेय इवापरः ।
तेन मृत्युस्तव वशे स्थितो भृत्य इवानतः ४७

वैशम्पायन उवाच ।

एवमुक्तस्तु गाङ्गेयः पाण्डवानिदमब्रवीत् ।
धृतराष्ट्रमुखांश्चापि सर्वांश्च सुहृदस्तथा ॥ ४८
प्राणानुत्स्रष्टुमिच्छामि तत्रानुज्ञातुमर्हथ ।
सत्येषु यतितव्यं वः सत्यं हि परमं बलम् ४९
आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः ।
ब्रह्मण्यैर्धर्मशीलैश्च तपोनित्यैश्च भारताः ॥५०
इत्युक्त्वा सुहृदः सर्वान्संपरिष्वज्य चैव ह ।
पुनरेवाब्रवीद्धीमान्युधिष्ठिरमिदं वचः ॥ ५१
ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषतः ।
आचार्या ऋत्विजश्चैव पूजनीया जनाधिप ॥

इति श्रीमहाभारते अनुशासनपर्वणि भीष्मस्वर्गारोहणपर्वणि दानधर्मे सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

## १६८

वैशम्पायन उवाच ।

एवमुक्त्वा कुरून्सर्वान् भीष्मः शांतनवस्तदा
तूष्णीं बभूव कौरव्यः स मुहूर्तमरिंदम ॥ १
धारयामास चात्मानं धारणासु यथाक्रमम् ।
तस्योर्ध्वमगमन्प्राणाः संनिरुद्धा महात्मनः २

---

इति श्रीमहाभारते अनुशासनपर्वणि नैलकण्ठीये भारतभावदीपे सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

१६८

एवमुक्त्वेति ॥१॥ धारणासु आधारादिषु स्थानेषु यथाक्रमं मूलाधारात् स्वाधिष्ठानं ततो मणिपूरं ततोऽनाहतं ततो विशुद्धिं तत आज्ञामेवं क्रमेण मनःसहितं वायुं निरुध्योपर्युपर्यानीतवानित्यर्थः ॥ २ ॥

इदमाश्चर्यमासीच्च मध्ये तेषां महात्मनाम् ।
सहितैर्ऋषिभिः सर्वैस्तदा व्यासादिभिः प्रभो
यद्यन्मुंचति गात्रं हि स शान्तनुसुतस्तदा ।
तत्तद्विशल्यं भवति योगयुक्तस्य तस्य वै ॥ ४
क्षणेन प्रेक्षतां तेषां विशल्यः सोऽभवत्तदा ।
तद्दृष्ट्वा विस्मिताः सर्वे वासुदेवपुरोगमाः ॥ ५
सह तैर्मुनिभिः सर्वैस्तदा व्यासादिभिर्नृप ।
सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु च ॥ ६
जगाम भित्त्वा मूर्धानं दिवमभ्युत्पपात ह ।
देवदुन्दुभिनादश्च पुष्पवर्षैः सहाभवत् ॥ ७
सिद्धा ब्रह्मर्षयश्चैव साधु साध्विति हर्षिताः ।
महोल्केव च भीष्मस्य मूर्धदेशाज्जनाधिप ॥ ८
निःसृत्याकाशमाविश्य क्षणेनान्तरधीयत ।
एवं स राजशार्दूल नृपः शान्तनवस्तदा ॥ ९
समयुज्यत कालेन भरतानां कुलोद्वहः ।
ततस्त्वादाय दारूणि गन्धांश्च विविधान्बहून् ।
चितां चक्रुर्महात्मानः पाण्डवा विदुरस्तथा ।
युयुत्सुश्चापि कौरव्यं प्रेक्षकास्त्वितरेऽभवन् ॥
युधिष्ठिरश्च गाङ्गेयं विदुरश्च महामतिः ।
छादयामासतुरुभौ क्षौमैर्माल्यैश्च कौरवम् ॥ १२
धारयामास तस्याथ युयुत्सुश्छत्रमुत्तमम् ।
चामरव्यजने शुभ्रे भीमसेनार्जुनावुभौ ॥ १३
उष्णीषे परिगृह्णीतां माद्रीपुत्रावुभौ तथा ।
स्त्रियः कौरवनाथस्य भीष्मं कुरुकुलोद्वहम् १४
तालवृन्तान्युपादाय पर्यवीजन्त सर्वशः ।
ततोऽस्य विधिवच्चक्रुः पितृमेधं महात्मनः १५
यजनं बहुशश्चाग्नौ जगुः सामानि सामगाः ।
ततश्चन्दनकाष्ठैश्च तथा कालीयकैरपि ॥ १६
कालागुरुप्रभृतिभिर्गन्धैश्चोच्चावचैस्तथा ।
समवच्छाद्य गाङ्गेयं संप्रज्वाल्य हुताशनम् ॥
अपसव्यमकुर्वन्त धृतराष्ट्रमुखाश्रिताम् ।
संस्कृत्य च कुरुश्रेष्ठं गाङ्गेयं कुरुसत्तमाः ॥ १८
जग्मुर्भागीरथीं पुण्यामृषिजुष्टां कुरूद्वहाः ।
अनुगम्यमाना व्यासेन नारदेनासितेन च १९
कृष्णेन भरतस्त्रीभिर्ये च पौराः समागताः ।
उदकं चक्रिरे चैव गाङ्गेयस्य महात्मनः ॥ २०

विधिवत्क्षत्रियश्रेष्ठाः स च सर्वो जनस्तदा ।
ततो भागीरथी देवी तनयस्योदके कृते ॥ २१
उत्थाय सलिलात्तस्माद्रुदती शोकविह्वला ।
परिदेवयती तत्र कौरवानभ्यभाषत ॥ २२
निबोधत यथावृत्तमुच्यमानं मयाऽनघाः ।
राजवृत्तेन संपन्नः प्रज्ञयाऽभिजनेन च ॥ २३
सत्कर्ता कुरुवृद्धानां पितृभक्तो महाव्रतः ।
जामदग्न्येन रामेण यः पुरा न पराजितः ॥ २४
दिव्यैरस्त्रैर्महावीर्यः स हतोऽद्य शिखण्डिना
अश्मसारमयं नूनं हृदयं मम पार्थिवाः ॥ २५
अपश्यन्त्याः प्रियं पुत्रं यन्न दीर्यति मेऽद्य वै ।
समेतं पार्थिवं क्षत्रं काशिपुर्यां स्वयंवरे ॥ २६
विजित्यैकरथेनैव कन्याश्चायं जहार ह ।
यस्य नास्ति बले तुल्यः पृथिव्यामपि कश्चन
हतं शिखण्डिना श्रुत्वा न विदीर्येत यन्मनः ।
जामदग्न्यः कुरुक्षेत्रे युधि येन महात्मना २८
पीडितो नातियत्नेन स हतोऽद्य शिखंडिना ।
एवंविधं बहु तदा विलपन्तीं महानदीम् ॥ २९
आश्वासयामास तदा गङ्गां दामोदरो विभुः ।
समाश्वसिहि भद्रे त्वं मा शुचः शुभदर्शने ३०
गतः स परमं लोकं तव पुत्रो न संशयः ।
वसुरेष महातेजाः शापदोषेण शोभने ॥ ३१
मानुषत्वमनुप्राप्तो नैनं शोचितुमर्हसि ।
स एष क्षत्रधर्मेण अयुध्यत रणाजिरे ॥ ३२
धनंजयेन निहतो नैष देवि शिखण्डिना ।
भीष्मं हि कुरुशार्दूलमुद्यतेषुं महारणे ॥ ३३
न शक्तः संयुगे हन्तुं साक्षादपि शतक्रतुः ।
स्वच्छंदतस्तव सुतो गतः स्वर्गं शुभानने ॥ ३४
न शक्ता विनिहन्तुं हि रणे तं सर्वदेवताः ।
तस्मान्मा त्वं सरिच्छ्रेष्ठे शोचस्व कुरुनंदनम्
वसूनेष गतो देवि पुत्रस्ते विज्वरा भव ॥ ३५

वैशम्पायन उवाच ।

इत्युक्ता सा तु कृष्णेन व्यासेन तु सरिद्वरा
त्यक्त्वा शोकं महाराज स्वं वार्यवततार ह ॥
सत्कृत्य ते तां सरितं ततः कृष्णमुखा नृप ।
अनुज्ञातास्तया सर्वे न्यवर्तन्त जनाधिपाः ३७

---

यद्यदिति प्राणेन मुक्तं. गात्रं प्रशिथिलावयवसंयोगं सत् ममसपि शरं धारयितुमक्षममभूत् अतस्तत्तदङ्गं विशल्यमभूदित्यर्थः ॥ ४ ॥ आत्मा प्राणसंयुक्तं मनः ॥ ६ ॥ उष्णीषे किरीटशिरोवेष्टे । 'उष्णीषं तु शिरोवेष्टे किरीटे लक्षणान्तरे' इति मेदिनी ॥ १४ ॥ मरणजं शोकमपनयति- वसुरेष इति । देवस्य मानुषत्वं नरकतुल्यं अतोऽयं हीनस्थानादुत्तमं लोकं गतो न शोच्य इत्यर्थः ॥ ३१ ॥ नीचहस्तेन मरणजातं शोकं दूरीकरोति-स एष इति ॥ ३२ ॥ अर्जुनमपि शप्स्यतीति शंकया तस्य मृत्युभयमेव नास्तीत्याह-भीष्मं हीति ॥ ३३ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां अनुशासनपर्वणि भीष्मस्वर्गारोहणपर्वणि दानधर्मे भीष्मयुधिष्ठिरसंवादे भीष्ममुक्तिर्नाम अष्टषष्ट्यधिकशततमोऽध्यायः ॥१६८॥

॥ इति अनुशासनपर्व समाप्तम् ॥

गोपालं भूम्नि वेदे शिवमुपनिषदि ब्रह्मविल्लक्ष्मणार्यं
तर्के धीरेशमिश्रान् फणिपतिभणितौ पोलगङ्गाधरार्यम् ।
भाट्टे नारायणं यो गुरुमकृत ततं दक्षिणामूर्त्युपास्तौ
श्रौते चिन्तामणिं च व्यभजत स महाभारते दानधर्मान् ॥ १ ॥

इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविन्दसूरिसूनोर्नीलकण्ठस्य कृतौ भारतभावदीपे अनुशासनपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

अतः परमाश्वमेधिकं पर्व भविष्यति । तस्यायमाद्यः श्लोकः ।

वैशम्पायन उवाच ।

कृतोदकं तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुरुत्तताराकुलेन्द्रियः ॥ १

* यद्यप्यादिपर्वणि पर्वसंग्रहकथनावसरे ' एतत्त्रयोदशं पर्व धर्मनिश्चयकारकम् । अध्यायानां शतं त्वत्र षट्चत्वारिंशदेव तु । श्लोकानां तु सहस्राणि प्रोक्तान्यष्टौ प्रसंख्यया ' इत्युक्तम् । तथापि संप्रति पर्वण्यस्मिन् अध्यायाः १६८, श्लोकाश्च ७७०१ एतावन्त एव प्रायो दृश्यन्ते । एतत्सुधीभिर्मृग्यम् ।

अयं ग्रन्थः श्रीकिञ्जवडेकरकुलकमलदिवाकरसोमयाजिदत्तात्रेयदीक्षिततनुज-पण्डित-रामचन्द्रशास्त्रिणा परिशोधितष्टिप्पण्यादिना परिष्कृतश्च । भारती जयतु ॥ शाकः १८५५ ॥

# Shriman MAHĀBHĀRATAM

## Part VI

## XIV

## Āshwamedhika parvan

WITH

## Bharata Bhawadeepa By Nilkantha.

**Edited by**

Pandit Ramachandrashastri Kinjawadekar.

---

*PRINTED & PUBLISHED*

BY

SHANKAR NARAHAR JOSHI

Chitrashala Press, 1026 Sadashiv Peth, Poona City.

*Shake 1855.* ] *First Edition.* [ *A. D. 1933.*

# श्रीमन्महाभारतम्।

## षष्ठभागे—आश्वमेधिकपर्व।

### चतुर्धरवंशावतंसश्रीमन्नीलकण्ठविरचित-भारतभावदीपाख्यटीकया समेतम्।

पण्डित रामचंद्रशास्त्री किंजवडेकर इत्येतैः पाठान्तर-टिप्पण्यादियोजनया समलङ्कृतम्।

तच्च

पुण्याख्यपत्तने

१०२६ सदाशिववीथ्यां चित्रशालाख्ये मुद्रणालये 'शंकर नरहर जोशी'
इत्येतैः संमुद्य प्रकाशितम्।

शालिवाहनशकाब्दाः १८५५] प्रथमं संस्करणम्। [ख्रिस्ताब्दाः १९३३

॥ श्रीभारती जयतु ॥

# ॥ महाभारतम् ॥

## आश्वमेधिकपर्व ।

### —१४—

### विषयानुक्रमणिका ।

---

## (२) अनुगीतापर्व—२०–१३०

॥ इत्याश्वमेधिकपर्वविषयानुक्रमणिका समाप्ता ॥

# ॥ महाभारतम् ॥

## आश्वमेधिकपर्व ।

### -१४-

### अश्वमेधपर्व ।

**नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥**

**वैशम्पायन उवाच ।**

**कृतोदकं तु राजानं धृतराष्ट्रं युधिष्ठिरः ।**
**पुरस्कृत्य महाबाहुरुत्तताराकुलेन्द्रियः ॥ २**
**उत्तीर्य तु महाबाहुर्बाष्पव्याकुललोचनः ।**
**पपात तीरे गंगाया व्याधविद्ध इव द्विपः ३**
**तं सीदमानं जग्राह भीमः कृष्णेन चोदितः ।**
**मैवमित्यब्रवीच्चैनं कृष्णः परबलार्दनः ॥ ४**
**तमार्तं पतितं भूमौ श्वसन्तं च पुनः पुनः ।**
**ददृशुः पार्थिवा राजन्धर्मपुत्रं युधिष्ठिरम् ५**

**श्रीगणेशाय नमः ।**

श्रीमद्गोपालमानम्य प्राचीनाचार्यवर्त्मना । आश्वमेधिकभावार्थः श्रीकृष्णेन प्रकाश्यते ॥ १ ॥ अश्विस्तुत्यूर्ध्वयायाताष्टावक्रीयेषु सूत्रितं । सानत्सुजाते विवृतं गीतायां विपुलीकृतं ॥ २ ॥ मोक्षधर्मेषु च पुनर्नानाख्यानोपबृंहणैः । अतीव व्याकृतं प्रत्यगात्मतत्त्वमनाकुलं ॥ ३ ॥ यज्जिज्ञासोदयायैव जपदानादयः स्मृताः । आनुशासनिकेसम्यक्चित्तदोषविनाशकाः ॥ ४ ॥ यत्र प्रावण्यलाभाय वैराग्योदयसिद्धये । कुरुक्षयादिको लोकवृत्तांत उपवर्णितः ॥५॥ तदेव स्पष्टमत्रोपसंहारव्यपदेशतः । आत्मतत्त्वं विवृणुते मुनिराख्यानकैस्त्रिभिः ॥ ६ ॥ आख्यानत्रयं च संवर्त्तमरुत्तीयं कृष्णधर्मसंवादः कृष्णार्जुनसंवादश्च। **तत्राद्ये** काश्यां मृतस्य मुक्तिं लिंगेनैव सूचयित्वा ईश्वराराधनादिना धर्मेणैव धनं लब्ध्वाऽऽत्मशुद्धये यष्टव्यमित्युक्तं **द्वितीये** शास्त्रार्थसूत्रणम्। तृतीये तद्विवरणं चेति तदूर्ध्वमुत्तङ्कोंच्छवृत्त्याद्याख्यानैर्ज्ञानोपयोगि गुरुशुश्रूषामाहात्म्याहिंसात्मकयज्ञनिंदादि च यथायथं तात्पर्यविषयतया ज्ञेयम् । तत्रायमाद्यः श्लोकः–**नारायणमिति**। 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः प्रोक्तं तेन नारायणः स्मृत ' इति स्मृतेराप:पुरुषवचस इति श्रुतेश्चाप:प्रधानं भूतपंचकं नरेणांतर्यामिणा सृष्टं नारं तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः स्रष्टा प्रवेष्टा च नारायण ईश्वरः स एव प्रविश्योपाधिधर्मानभिमन्यमानो नरो जीवः ताभ्यामुत्तमो नरोत्तमः कार्यकारणोपाधिद्वयनिर्मुक्तः परमात्मा एतत्त्रयं तत्स्वरूपप्रकाशिकां सरस्वतीं देवीं च प्रणम्य जयं महाभारताख्यमितिहासं सर्वश्रुतिस्मृतिसारभूतमुदीरयेदिति तस्यार्थः । एतेन तत्त्वमस्यादिवाक्यार्थौ जीवब्रह्माभेदो ग्रंथप्रतिपाद्यो दर्शितः। **कृतोदकं तु राजानमिति** उत्ततार गंगां त इति शेषः ॥ १ ॥

तं दृष्ट्वा दीनमनसं गतसत्त्वं नरेश्वरम् ।
भूयः शोकसमाविष्टाः पांडवाः समुपाविशन् ।
राजा तु धृतराष्ट्रश्च पुत्रशोकाभिपीडितः ।
वाक्यमाह महाबुद्धिः प्रज्ञाचक्षुर्नरेश्वरम् ॥ ७
उत्तिष्ठ कुरुशार्दूल कुरु कार्यमनन्तरम् ।
क्षत्रधर्मेण कौन्तेय जितेयमवनी त्वया ॥ ८
भुंक्ष्व भोगान्भ्रातृभिश्च सुहृद्भिश्च मनोनुगान् ।
शोचितव्यं न पश्यामि त्वया धर्मभृतां वर
शोचितव्यं मया चैव गान्धार्या च महीपते ।
ययोः पुत्रशतं नष्टं स्वप्नलब्धं यथा धनम् १०
अश्रुत्वा हितकामस्य विदुरस्य महात्मनः ।
वाक्यानि सुमहार्थानि परितप्यामि दुर्मतिः
उक्तवान्विदुरो यन्मां धर्मात्मा दिव्यदर्शनः
दुर्योधनापराधेन कुलं ते विनशिष्यति ॥ १२
स्वस्ति चेदिच्छसे राजन्कुलस्य कुरु मे वचः
वध्यतामेष दुष्टात्मा मन्दो राजा सुयोधनः ॥
कर्णश्च शकुनिश्चैव नैनं पश्यतु कर्हिचित् ।
द्यूतसंघातमप्येषामप्रमादेन वारय ॥ १४
अभिषेचय राजानं धर्मात्मानं युधिष्ठिरम् ।
स पालयिष्यति वशी धर्मेण पृथिवीमिमाम्
अथ नेच्छसि राजानं कुन्तीपुत्रं युधिष्ठिरम् ।
मेढीभूतः स्वयं राज्यं प्रतिगृह्णीष्व पार्थिव १६
समं सर्वेषु भूतेषु वर्तमानं नराधिप ।
अनुजीवंतु सर्वे त्वां ज्ञातयो भ्रातृभिः सह
एवं ब्रुवति कौन्तेय विदुरे दीर्घदर्शिनि ।
दुर्योधनमहं पापमन्ववर्तं वृथामतिः ॥ १८
अश्रुत्वा तस्य धीरस्य वाक्यानि मधुराण्यहम्
फलं प्राप्य महद्दुःखं निमग्नः शोकसागरे १९
वृद्धौ हि तेऽद्य पितरौ पश्य नौ दुःखितौ नृप
न शोचितव्यं भवता पश्यामीह जनाधिप२०

इति श्रीमहाभारते आश्वमेधिके पर्वणि अश्वमेधपर्वणि
प्रथमोऽध्यायः ॥ १ ॥

## २

वैशम्पायन उवाच ।
एवमुक्तस्तु राज्ञा स धृतराष्ट्रेण धीमता ।
तूष्णीं बभूव मेधावी तमुवाचाथ केशवः ॥ १
अतीव मनसा शोकः क्रियमाणो जनाधिप ।
सन्तापयति चैतस्य पूर्वप्रेतान्पितामहान् २
यजस्व विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः ।
देवांस्तर्पय सोमेन स्वधया च पितॄनपि ॥ ३
अतिथीनन्नपानेन कामैरन्यैरकिंचनान्* ।
विदितं वेदितव्यं ते कर्तव्यमपि ते कृतम् ४
श्रुताश्च राजधर्मास्ते भीष्माद्भागीरथीसुतात् ।
कृष्णद्वैपायनाच्चैव नारदाद्विदुरात्तथा ॥ ५
नेमामर्हसि मूढानां वृत्तिं त्वमनुवर्तितुम् ।
पितृपैतामहं वृत्तमास्थाय धुरमुद्वह ॥ ६
युक्तं हि यशसा क्षात्रं स्वर्गं प्राप्तुमसंशयम् ।
न हि कश्चिद्धि शूराणां निहतोऽत्र पराङ्मुखः
त्यज शोकं महाराज भवितव्यं हि तत्तथा ।
न शक्यास्ते पुनर्द्रष्टुं त्वया येऽस्मिन् रणे हताः
एतावदुक्त्वा गोविन्दो धर्मराजं युधिष्ठिरम् ।
विरराम महातेजास्तमुवाच युधिष्ठिरः ॥ ९
युधिष्ठिर उवाच ।
गोविन्द मयि या प्रीतिस्तव सा विदिता मम
सौहृदेन तथा प्रेम्णा सदा मय्यनुकम्पसे १०
प्रियं तु मे स्यात्सुमहत्कृतं चक्रगदाधर ।
श्रीमन्प्रीतेन मनसा सर्वं यादवनन्दन ॥ ११
यदि मामनुजानीयाद्भवान्गन्तुं तपोवनम् ।
न हि शांतिं प्रपश्यामि पातयित्वा पितामहम्
कर्णं च पुरुषव्याघ्रं संग्रामेष्वपलायिनम् ।
कर्मणा येन मुच्येयमस्मात्क्रूरादरिन्दम १२
कर्मणा तद्विधत्स्वेह येन शुध्यति मे मनः ।
तमेवंवादिनं पार्थं व्यासः प्रोवाच धर्मवित्

इत्याश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे प्रथमोऽध्यायः॥१॥ *'त्वद्विधस्य महाबुद्धे नैतदद्योपपद्यते'इति पा०

२

एवं शोकाक्रांतो वैराग्यमिच्छतीति स्पष्टयति-**एवमुक्तस्त्वि**त्यध्यायेन ॥ १ ॥

सांत्वयन्सुमहातेजाः शुभं वचनमर्थवत् ।
अकृता ते मतिस्तात पुनर्बाल्येन मुह्यसे ॥ १५
किमाकारा वयं तात प्रलपामो मुहुर्मुहुः ।
विदिताः क्षत्रधर्मास्ते येषां युद्धेन जीविका
तथा प्रवृत्तो नृपतिर्नोधिबन्धेन युज्यसे ।
मोक्षधर्माश्च निखिला याथातथ्येन ते श्रुताः
असकृच्चापि सन्देहाश्छिन्नास्ते कामजा मया
अश्रद्दधानो दुर्मेधा लुप्तस्मृतिरसि ध्रुवम् १८
मैवं भव न ते युक्तमिदमज्ञानमीदृशम् ।
प्रायश्चित्तानि सर्वाणि विदितानि च तेऽनघ
राजधर्माश्च ते सर्वे दानधर्माश्च ते श्रुताः ।
स कथं सर्वधर्मज्ञः सर्वागमविशारदः ।
परिमुह्यसि भूयस्त्वमज्ञानादिव भारत ॥ २०

इति श्रीमहाभारते आश्वमेधिके पर्वणि अश्वमेधपर्वणि
द्वितीयोऽध्यायः ॥ २ ॥

## ३

व्यास उवाच ।
युधिष्ठिर तव प्रज्ञा न सम्यगिति मे मतिः
नहि कश्चित्स्वयं मर्त्यः स्ववशः कुरुते क्रियाम्
ईश्वरेण च युक्तोऽयं साध्वसाधु च मानवः ।
करोति पुरुषः कर्म तत्र का परिदेवना ॥ २
आत्मानं मन्यसे चाथ पापकर्माणमन्ततः ।
शृणु तत्र यथापापमपकृष्येत भारत ॥ ३
तपोभिः क्रतुभिश्चैव दानेन च युधिष्ठिर ।
तरन्ति नित्यं पुरुषा ये स्म पापानि कुर्वते ।
यज्ञेन तपसा चैव दानेन च नराधिप ।
पूयन्ते नरशार्दूल नरा दुष्कृतकारिणः ॥ ५
असुराश्च सुराश्चैव पुण्यहेतोर्मखक्रियाम् ।
प्रयतन्ते महात्मानस्तस्माद्यज्ञाः परायणम् ६
यज्ञैरेव महात्मानो बभूवुरधिकाः सुराः ।
ततो देवाः क्रियावन्तो दानवानभ्यधर्षयन् ७
राजसूयाश्वमेधौ च सर्वमेधं च भारत ।
नरमेधं च नृपते त्वमाहर युधिष्ठिर ॥ ८
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ।
बहुकामान्नवित्तेन रामो दाशरथिर्यथा ॥ ९
यथा च भरतो राजा दौष्यन्तिः पृथिवीपतिः
शाकुन्तलो महावीर्यस्तव पूर्वपितामहः ॥ १०

युधिष्ठिर उवाच ।
असंशयं वाजिमेधः पावयेत्पृथिवीमपि ।
अभिप्रायस्तु मे कश्चित्तं त्वं श्रोतुमिहार्हसि ११
इमं ज्ञातिवधं कृत्वा सुमहान्तं द्विजोत्तम ।
दानमल्पं न शक्नोमि दातुं वित्तं च नास्ति मे
न तु बालानिमान्दीनानुत्सहे वसु याचितुम्
तथैवार्द्रव्रणान्कृच्छ्रे वर्तमानान्नृपात्मजान् १३
स्वयं विनाश्य पृथिवीं यज्ञार्थे द्विजसत्तम ।
करमाहारयिष्यामि कथं शोकपरायणः ॥ १४
दुर्योधनापराधेन वसुधा वसुधाधिपाः ।
प्रनष्टा योजयित्वास्मानकीर्त्या मुनिसत्तम १५
दुर्योधनेन पृथिवी क्षयिता वित्तकारणात् ।
कोशश्चापि विशीर्णोऽसौ धार्तराष्ट्रस्य दुर्मतेः
पृथिवी दक्षिणा चात्र विधिः प्रथमकल्पितः
विद्वद्भिः परिदृष्टोयं शिष्टो विधिविपर्ययः १७
न च प्रतिनिधिं कर्तुं चिकीर्षामि तपोधन ।
अत्र मे भगवन्सम्यक्साचिव्यं कर्तुमर्हसि १८
एवमुक्तस्तु पार्थेन कृष्णद्वैपायनस्तदा ।
मुहूर्तमनुसञ्चिन्त्य धर्मराजानमब्रवीत् ॥ १९
कोशश्चापि विशीर्णोयं परिपूर्णो भविष्यति
विद्यते द्रविणं पार्थ गिरौ हिमवति स्थितम् ॥

इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे द्वितीयोऽध्यायः ॥ २ ॥

३

मौढ्यप्रयुक्ताद्वैराग्याच्छास्त्रीयकर्माचरणमेव श्रेय इत्युक्तं- युधिष्ठिर तव प्रज्ञे० ॥१॥ प्रतिनिधिमनुकल्पम् ॥१८॥

उत्सृष्टं ब्राह्मणैर्यज्ञे मरुत्तस्य महात्मनः।
तदानयस्व कौन्तेय पर्याप्तं तद्भविष्यति २१
युधिष्ठिर उवाच।
कथं यज्ञे मरुत्तस्य द्रविणं तत्समाचितम्।
कस्मिंश्च काले स नृपो बभूव वदतां वर २२
व्यास उवाच।
यदि शुश्रूषसे पार्थ शृणु कारन्धमं नृपम्।
यस्मिन्काले महावीर्यः स राजासीन्महाधनः

इति श्रीमहाभारते आश्वमेधिके पर्वणि अश्वमेध पर्वणि संवर्तमरुत्तीये तृतीयोऽध्यायः॥ ३॥

## ४

युधिष्ठिर उवाच।
शुश्रूषे तस्य धर्मज्ञ राजर्षेः परिकीर्तनम्।
द्वैपायन मरुत्तस्य कथां प्रब्रूहि मेऽनघ॥ १
व्यास उवाच।
आसीत्कृतयुगे तात मनुर्दण्डधरः प्रभुः।
तस्य पुत्रो महाबाहुः प्रसन्धिरिति विश्रुतः २
प्रसन्धेरभवत्पुत्रः क्षुप इत्यभिविश्रुतः।
क्षुपस्य पुत्र इक्ष्वाकुर्महीपालोऽभवत्प्रभुः ३
तस्य पुत्रशतं राजन्नासीत्परधार्मिकम्।
तांस्तु सर्वान्महीपालानिक्ष्वाकुरकरोत्प्रभुः ४
तेषां ज्येष्ठस्तु विंशोऽभूत्प्रतिमानं धनुष्मताम्
विंशस्य पुत्रः कल्याणो विविंशो नाम भारत
विविंशस्य सुता राजन्बभूवुर्दश पञ्च च।
सर्वे धनुषि विक्रान्ता ब्रह्मण्याः सत्यवादिनः
दानधर्मरताः शान्ताः सततं प्रियवादिनः।
तेषां ज्येष्ठः खनीनेत्रः स तान्सर्वानपीडयत् ७
खनीनेत्रस्तु विक्रांतो जित्वा राज्यमकण्टकम्
नाशकद्रक्षितुं राज्यं नान्वरज्यन्त तं प्रजाः ८
तमपास्य च तद्राज्ये तस्य पुत्रं सुवर्चसम्।
अभ्यषिञ्चन्त राजेन्द्र मुदिता ह्यभवंस्तदा ९
स पितुर्विक्रियां दृष्ट्वा राज्यान्निरसनं च तत्
नियतो वर्तयामास प्रजाहितचिकीर्षया॥ १०
ब्रह्मण्यः सत्यवादी च शुचिः शमदमान्वितः।
प्रजास्तं चान्वरज्यन्त धर्मनित्यं मनस्विनम्
तस्य धर्मप्रवृत्तस्य व्यशीर्यत्कोशवाहनम्।
तं क्षीणकोशं सामन्ताः समन्तात्पर्यपीडयन्
स पीड्यमानो बहुभिः क्षीणकोशाश्ववाहनः।
आर्तिमार्च्छत्परां राजा सह भृत्यैः पुरेण च
न चैनमभिहन्तुं ते शक्नुवन्ति बलक्षये।
सम्यग्वृत्तो हि राजा स धर्मनित्यो युधिष्ठिर
यदा तु परमामार्तिं गतोऽसौ सपुरो नृपः।
ततः प्रदध्मौ स करं प्रादुरासीत्ततो बलम्॥
ततस्तानजयत्सर्वान्प्रातिसीमान्नराधिपान्।
एतस्मात्कारणाद्राजन्विश्रुतः स करन्धमः
तस्य कारन्धमः पुत्रस्त्रेतायुगमुखेऽभवत्।
इन्द्रादनवरः श्रीमान्देवैरपि सुदुर्जयः॥ १७
तस्य सर्वे महीपाला वर्तन्ते स्म वशे तदा।
स हि सम्राडभूत्तेषां वृत्तेन च बलेन च॥ १८
अविक्षिन्नाम धर्मात्मा शौर्येणेन्द्रसमोऽभवत्
यज्ञशीलो धर्मरतिर्धृतिमान्संयतेन्द्रियः १९
तेजसाऽऽदित्यसदृशः क्षमया पृथिवीसमः।
बृहस्पतिसमो बुद्ध्या हिमवानिव सुस्थिरः २०
कर्मणा मनसा वाचा दमेन प्रशमेन च।
मनांस्याराधयामास प्रजानां स महीपतिः २१
य ईजे हयमेधानां शतेन विधिवत्प्रभुः।
याजयामास यं विद्वान्स्वयमेवाङ्गिराः प्रभुः॥
तस्य पुत्रोऽतिचक्राम पितरं गुणवत्तया।
मरुत्तो नाम धर्मज्ञश्चक्रवर्ती महायशाः॥ २३
नागायुतसमप्राणः साक्षाद्विष्णुरिवापरः।
स यक्ष्यमाणो धर्मात्मा शातकुम्भमयान्युत॥

---

इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे तृतीयोऽध्यायः॥ ३॥

४

शुश्रूषे इति॥ १॥ मरुत्तयज्ञप्रशंसाप्रसंगात्तद्वंश्यान्स्तौति आसीत्कृतयुग इत्यादिना अध्यायद्वयेन अत्यंतं महान्तोऽपि कर्मैवानुतिष्ठंतीति कर्ममाहात्म्यख्यापनार्थम् २॥

कारयामास शुभ्राणि भाजनानि सहस्रशः ।
मेरुं पर्वतमासाद्य हिमवत्पार्श्वे उत्तरे ॥ २५
कांचनः सुमहान्पादस्तत्र कर्म चकार सः ।
ततः कुण्डानि पात्रींश्च पिठराण्यासनानि च
चक्रुः सुवर्णकर्तारो येषां संख्या न विद्यते ।
तस्यैव च समीपे तु यज्ञवाटो बभूव ह २७
ईजे तत्र स धर्मात्मा विधिवत्पृथिवीपातिः ।
मरुत्तः सहितैः सर्वैः प्रजापालैर्नराधिपः ॥ २८

इति श्रीमहाभारते आश्वमेधिके पर्वणि अश्वमेधपर्वणि संवर्तमरुत्तीये चतुर्थोऽध्यायः ॥ ४ ॥

## ५

युधिष्ठिर उवाच ।

कथंवीर्यः समभवत्स राजा वदतां वर ।
कथं च जातरूपेण समयुज्यत स द्विज ॥ १
क्व च तत्सांप्रतं द्रव्यं भगवन्नवतिष्ठते ।
कथं च शक्यमस्माभिस्तदवाप्तुं तपोधन ॥ २

व्यास उवाच ।

असुराश्चैव देवाश्च दक्षस्यासन्प्रजापतेः ।
अपत्यं बहुलं तात संस्पर्धंत परस्परम् ॥ ३
तथैवांगिरसः पुत्रौ व्रततुल्यौ बभूवतुः ।
बृहस्पतिर्बृहत्तेजाः संवर्तश्च तपोधनः ॥ ४
तावतिस्पर्धिनौ राजन्पृथगास्तां परस्परम् ।
बृहस्पतिः स संवर्तं बाधते स्म पुनः पुनः ॥ ५
स बाध्यमानः सततं भ्रात्रा ज्येष्ठेन भारत ।
अर्थानुत्सृज्य दिग्वासा वनवासमरोचयत् ६
वासवोप्यसुरान्सर्वान्विजित्य च निपात्य च
इंद्रत्वं प्राप्य लोकेषु ततो वव्रे पुरोहितम् ॥ ७
पुत्रमंगिरसो ज्येष्ठं विप्रज्येष्ठं बृहस्पतिम् ।
याज्यस्त्वंगिरसः पूर्वमासीद्राजा करंधमः ८
वीर्येणाप्रतिमो लोके वृत्तेन च बलेन च ।
शतक्रतुरिवौजस्वी धर्मात्मा संशितव्रतः ॥ ९
वाहनं यस्य योधाश्च मित्राणि विविधानि च ।
शयनानि च मुख्यानि महार्हाणि च सर्वशः ॥
ध्यानादेवाभवद्राजन्मुखवातेन सर्वशः ।
स गुणैः पार्थिवान्सर्वान्वशे चक्रे नराधिपः ११
संजीव्य कालमिष्टं च सशरीरो दिवं गतः ।
बभूव तस्य पुत्रस्तु ययातिरिव धर्मवित् ॥ १२
अविक्षिन्नाम शत्रुंजित्स वशे कृतवान्महीम् ।
विक्रमेण गुणैश्चैव पितेवासीत्स पार्थिवः ॥ १३
तस्य वासवतुल्योऽभून्मरुत्तो नाम वीर्यवान् ।
पुत्रस्तमनुरक्ताऽभूत्पृथिवी सागराम्बरा ॥ १४
स्पर्धते स स्म सततं देवराजेन नित्यदा ।
वासवोपि मरुत्तेन स्पर्धते पाण्डुनन्दन ॥ १५
शुचिः स गुणवानासीन्मरुत्तः पृथिवीपतिः ।
यतमानोऽपि यं शक्रो न विशेषयति स्म ह ॥
सोऽशक्नुवन्विशेषाय समाहूय बृहस्पतिम् ।
उवाचेदं वचो देवैः सहितो हरिवाहनः ॥ १७
बृहस्पते मरुत्तस्य मा स्म कार्षीः कथंचन ।
दैवं कर्माथ पित्र्यं वा कर्तासि मम चेत्प्रियम् ॥
अहं हि त्रिषु लोकेषु सुराणां च बृहस्पते ।
इन्द्रत्वं प्राप्तवानेको मरुत्तस्तु महीपातिः ॥ १९
कथं ह्यमर्त्यं ब्रह्मंस्त्वं याजयित्वा सुराधिपम् ।
याजयेर्मृत्युसंयुक्तं मरुत्तमविशङ्कया ॥ २०
मां वा वृणीष्व भद्रं ते मरुत्तं वा महिपतिम् ।
परित्यज्य मरुत्तं वा यथाजोषं भजस्व माम् ॥
एवमुक्तः स कौरव्य देवराज्ञा बृहस्पतिः ।
मुहूर्तमिव सञ्चिन्त्य देवराजानमब्रवीत् ॥ २२
त्वं भूतानामधिपतिस्त्वयि लोकाः प्रतिष्ठिताः
नमुचेर्विश्वरूपस्य निहन्ता त्वं बलस्य च ॥ २३
त्वमाजहर्थ देवानामेको वीरश्रियं पराम् ।
त्वं बिभर्षि भुवं द्यां च सदैव बलसूदन ॥ २४
पौरोहित्यं कथं कृत्वा तव देवगणेश्वर ।
याजयेयमहं मर्त्यं मरुत्तं पाकशासन ॥ २५

---

इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे चतुर्थोऽध्यायः ॥ ४ ॥

५

कथमिति ॥ १ ॥

समाश्वसिहि देवेन्द्र नाहं मर्त्यस्य कर्हिचित्।
ग्रहीष्यामि स्रुवं यज्ञे श्रृणु चेदं वचो मम ॥ २६
हिरण्यरेता नोष्णः स्यात्परिवर्तेत मेदिनी।
भासं तु न रविः कुर्यान्न तु सत्यं चलेन्मयि ॥

वैशम्पायन उवाच।

बृहस्पतिवचः श्रुत्वा शक्रो विगतमत्सरः।
प्रशस्यैनं विवेशाथ स्वमेव भवनं तदा ॥ २८

इति श्रीमहाभारते आश्वमेधिके पर्वणि अश्वमेधपर्वणि संवर्तमरुत्तीये पञ्चमोऽध्यायः ॥ ५ ॥

६

व्यास उवाच।
अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
बृहस्पतेश्च संवादं मरुत्तस्य च धीमतः ॥ १
देवराजस्य समयं कृतमाङ्गिरसेन ह।
श्रुत्वा मरुत्तो नृपतिर्यज्ञमाहारयत्परम् ॥ २
संकल्प्य मनसा यज्ञं करन्धमसुतात्मजः।
बृहस्पतिमुपागम्य वाग्मी वचनमब्रवीत् ॥ ३
भगवन्यन्मया पूर्वमभिगम्य तपोधन।
कृतोऽभिसन्धिर्यज्ञस्य भवतो वचनाद्गुरो ॥ ४
तमहं यष्टुमिच्छामि संभाराः संभृताश्च मे।
याज्योस्मि भवतः साधो तत्प्राप्नुहि विधत्स्व च
बृहस्पतिरुवाच।
न कामये याजयितुं त्वामहं पृथिवीपते।
वृतोऽस्मि देवराजेन प्रतिज्ञातं च तस्य मे ॥ ६
मरुत्त उवाच।
पित्र्यमस्मि तव क्षेत्रं बहु मन्ये च ते भृशम्।
तवास्मि याज्यतां प्राप्तो भजमानं भजस्व माम्
बृहस्पतिरुवाच।
अमर्त्यं याजयित्वाऽहं
याजयिष्ये कथं नरम्।
मरुत्त गच्छ वा मा वा
निवृत्तोऽस्म्यद्य याजनात् ॥ ८
न त्वां याजयिताऽस्म्यद्य वृणु यं त्वमिहेच्छसि
उपाध्यायं महाबाहो यस्ते यज्ञं करिष्यति ९

व्यास उवाच।
एवमुक्तस्तु नृपतिर्मरुत्तो व्रीडितोऽभवत्।
प्रत्यागच्छन्सुसंविग्नो ददर्श पथि नारदं १०
देवर्षिणा समागम्य नारदेन स पार्थिवः।
विधिवत्प्राञ्जलिस्तस्थावथैनं नारदोऽब्रवीत् ॥
राजर्षे नातिहृष्टोऽसि कच्चित्क्षेमं तवानघ।
क्व गतोऽसि कुतश्चेदमप्रीतिस्थानमागतम् ॥ १२
श्रोतव्यं चेन्मया राजन्ब्रूहि मे पार्थिवर्षभ।
व्यपनेष्यामि ते मन्युं सर्वयत्नैर्नराधिप ॥ १३
एवमुक्तो मरुत्तः स नारदेन महर्षिणा।
विप्रलम्भमुपाध्यायात्सर्वमेव न्यवेदयत् ॥ १४
मरुत्त उवाच।
गतोऽस्म्यंगिरसः पुत्रं देवाचार्यं बृहस्पतिम्
यज्ञार्थमृत्विजं द्रष्टुं स च मां नाभ्यनन्दत १५
प्रत्याख्यातश्च तेनाहं जीवितुं नाद्य कामये।
परित्यक्तश्च गुरुणा दूषितश्चास्मि नारद १६
व्यास उवाच।
एवमुक्तस्तु राज्ञा स नारदः प्रत्युवाच ह।
आविक्षितं महाराज वाचा संजीवयन्निव १७
नारद उवाच।
राजन्नंगिरसः पुत्रः संवर्तो नाम धार्मिकः।
चंक्रमीति दिशः सर्वा दिग्वासा मोहयन्प्रजाः
तं गच्छ यदि याज्यं त्वां न वांछति बृहस्पतिः
प्रसन्नस्त्वां महातेजाः संवर्तो याजयिष्यति

---

इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे पंचमोऽध्यायः ॥ ५ ॥

६

संवर्तमरुत्तयोः संयोगं कथयन्नारदमुखेन वाराणसीमाहात्म्यं सूचयति-व्यास उवाच अत्राप्युदाहरन्तीममित्यादिना ॥ १ ॥

मरुत्त उवाच ।

संजीवितोऽहं भवता वाक्येनानेन नारद ।
पश्येयं क्व नु संवर्तं शंस मे वदतां वर ॥ २०
कथं च तस्मै वर्तेयं कथं मां न परित्यजेत् ।
प्रत्याख्यातश्च तेनापि नाहं जीवितुमुत्सहे २१

नारद उवाच ।

उन्मत्तवेषं विभ्रत्स चंक्रमीति यथासुखम् ।
वाराणस्यां महाराज दर्शनेप्सुर्महेश्वरम् ॥ २२
तस्या द्वारं समासाद्य न्यसेथाः कुणपं क्वचित्
तं दृष्ट्वा यो निवर्तेत संवर्तः स महीपते ॥ २३
तं पृष्ठतोऽनुगच्छेथा यत्र गच्छेत्स वीर्यवान् ।
तमेकान्ते समासाद्य प्राञ्जलिः शरणं व्रजेः २४
पृच्छेत्त्वां यदि केनाहं तवाख्यात इति स्म ह
ब्रूयास्त्वं नारदेनेति संवर्त कथितोऽसि मे ॥
स चेत्त्वामनुयुंजीत ममानुगमनेप्सया ।
शंसेथा वन्हिमारूढं मामपि त्वमशंकया ॥ २६

व्यास उवाच ।

स तथेति प्रतिश्रुत्य पूजयित्वा च नारदम् ।
अभ्यनुज्ञाय राजर्षिर्ययौ वाराणसीं पुरीम् ॥
तत्र गत्वा यथोक्तं स पुर्या द्वारे महायशाः ।
कुणपं स्थापयामास नारदस्य वचः स्मरन् ॥
यौगपद्येन विप्रश्च पुरीद्वारमथाविशत् ।
ततः स कुणपं दृष्ट्वा सहसा संन्यवर्तत ॥ २९
स तं निवृत्तमालक्ष्य प्राञ्जलिः पृष्ठतोन्वगात् ।
आविक्षितो महीपालः संवर्तमुपशिक्षितुम् ॥
स च तं विजने दृष्ट्वा पांसुभिः कर्दमेन च ।
श्लेष्मणा चैव राजानं ष्ठीवनैश्च समाकिरत् ३१
स तथा बाध्यमानो वै संवर्तेन महीपतिः ।
अन्वगादेव तमृषिं प्राञ्जलिः संप्रसादयन् ३२
ततो निवर्त्य संवर्त्तः परिश्रान्त उपाविशत् ।
शीतलच्छायमासाद्य न्यग्रोधं बहुशाखिनम् ३३

इति श्रीमहाभारते आश्वमेधिके पर्वणि अश्वमेधपर्वणि संवर्तमरुत्तीये षष्ठोऽध्यायः ॥ ६ ॥

७

संवर्त उवाच ।

कथमस्मि त्वया ज्ञातः केन वा कथितोऽस्मि ते
एतदाचक्ष्व मे तत्त्वमिच्छसे चेन्मम प्रियम्
सत्यं ते ब्रुवतः सर्वे संपत्स्यन्ते मनोरथाः ।
मिथ्या च ब्रुवतो मूर्धा शतधा ते स्फुटिष्यति

मरुत्त उवाच ।

नारदेन भवान्मह्यमाख्यातो ह्यटता पथि ।
गुरुपुत्रो ममेति त्वं ततो मे: प्रीतिरुत्तमा ॥ ३

संवर्त उवाच ।

सत्यमेतद्भवानाह स मां जानाति सत्रिणम्
कथयस्व तदेतन्मे क्व नु संप्रति नारदः ॥ ४

मरुत्त उवाच ।

भवन्तं कथयित्वा तु मम देवर्षिसत्तमः ।
ततो मामभ्यनुज्ञाय प्रविष्टो हव्यवाहनम् ॥५

व्यास उवाच ।

श्रुत्वा तु पार्थिवस्यैतत्संवर्तः प्रमुदं गतः ।
एतावदहमप्येवं शक्नुयामिति सोऽब्रवीत् ॥ ६
ततो मरुत्तमुन्मत्तो वाचा निर्भर्त्सयन्निव ।
रूक्षया ब्राह्मणो राजन्पुनः पुनरथाब्रवीत् ॥ ७
वातप्रधानेन मया स्वचित्तवशवर्तिना ।
एवं विकृतरूपेण कथं याजितुमिच्छसि ॥ ८

---

**उन्मत्तवेषमिति** । अत्र कुणपदर्शनेन महेश्वरदर्शनासीद्धिं दर्शयता कुणपस्य महेश्वरप्रतिमात्वं सूचितम् । तथा चाविमुक्तं प्रकृत्य : अत्र हि : जंतोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवतीति सिद्धः कुणपाभिमानिनो जीवस्य ब्रह्मभावोऽपूर्वो ज्ञापितः । एवं चोपरिधारणाविधिवद्विधिरेवायमित्युपपादितमुत्तरयायाते ॥ २२ ॥ इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे षष्ठोऽध्यायः ॥ ६ ॥

७

**कथमस्मीति** ॥ १ ॥ सत्रिणं कपटवेषच्छन्नम् ॥४॥

भ्राता मम समर्थश्च वासवेन च संगतः ।
वर्तते याजने चैव तेन कर्माणि कारय ॥ ९
गार्हस्थ्यं चैव याज्याश्च सर्वा गृह्याश्च देवताः
पूर्वजेन ममाक्षिप्तं शरीरं वर्जितं त्विदम् ॥ १०
नाहं तेनाननुज्ञातस्त्वामाविक्षित कर्हिचित ।
याजयेयं कथंचिद्वै स हि पूज्यतमो मम ॥ ११
स त्वं बृहस्पतिं गच्छ तमनुज्ञाप्य चाव्रज ।
ततोऽहं याजयिष्ये त्वां यदि यष्टुमिहेच्छसि

मरुत्त उवाच ।

बृहस्पतिं गतः पूर्वमहं संवर्त तच्छृणु ।
न मां कामयते याज्यमसौ वासवकाम्यया ॥
अमरं याज्यमासाद्य याजयिष्ये न मानुषम् ।
शक्रेण प्रतिषिद्धोऽहं मरुत्तं मा स्म याजयेः १४
स्पर्धते हि मया विप्र सदा हि स तु पार्थिवः
एवमस्त्विति चाप्युक्तो भ्रात्रा ते बलसूदनः ॥
स मामधिगतं प्रेम्णा याज्यत्वेन बुभूषति ।
देवराजं समाश्रित्य तद्विद्धि मुनिपुंगव ॥ १६
सोऽहमिच्छामि भवता सर्वस्वेनापि याजितुं
कामये समतिक्रान्तुं वासवं त्वत्कृतैर्गुणैः १७
न हि मे वर्तते बुद्धि-
र्गन्तुं ब्रह्मन्बृहस्पतिम् ।
प्रत्याख्यातो हि तेनास्मि
तथाऽनपकृते सति ॥ १८

संवर्त उवाच ।

चिकीर्षसि यथाकामं सर्वमेतत्त्वयि ध्रुवम् ।
यदि सर्वानभिप्रायान्कर्ताऽसि मम पार्थिव
याज्यमानं मया हि त्वां बृहस्पतिपुरन्दरौ ।
द्विषेतां समभिक्रुद्धावेतदेकं समर्थयेः ॥ २०
स्थैर्यमत्र कथं मे स्या-
त्सत्त्वं निःसंशयं कुरु ।
कुपितस्त्वां न हीदानीं
भस्म कुर्यां सबान्धवम् ॥ २१

मरुत्त उवाच ।

यावत्तपेत्सहस्रांशुस्तिष्ठेरंश्चापि पर्वताः ।
तावल्लोकान्न लभेयं त्यजेयं सङ्गतं यदि ॥ २२
मा चापि शुभबुद्धित्वं लभेयमिह कर्हिचित् ।
विषयैः सङ्गतं चास्तु त्यजेयं सङ्गतं यदि २३

संवर्त उवाच ।

आविक्षित शुभा बुद्धिर्वर्ततां तव कर्मसु ।
याजनं हि ममाप्येव वर्तते हृदि पार्थिव २४
अभिधास्ये च ते राजन्नक्षयं द्रव्यमुत्तमम् ।
येन देवान्सगंधर्वान् शक्रं चाभिभविष्यसि
न तु मे वर्तते बुद्धिर्धने याज्येषु वा पुनः ।
विप्रियं तु करिष्यामि भ्रातुश्चेन्द्रस्य चोभयोः
गमयिष्यामि शक्रेण समतामपि ते ध्रुवम् ।
प्रियं च ते करिष्यामि सत्यमेतद्ब्रवीमि ते २७

इति श्रीमहाभारते आश्वमेधिके पर्वणि अश्वमेधपर्वणि संवर्तमरुत्तीये सप्तमोऽध्यायः ॥ ७ ॥

## ८

संवर्त उवाच ।

गिरेर्हिमवतः पृष्ठे मुञ्जवान्नाम पर्वतः ।
तप्यते यत्र भगवांस्तपो नित्यमुमापतिः ॥ १
वनस्पतीनां मूलेषु श्रृङ्गेषु विषमेषु च ।
गुहासु शैलराजस्य यथाकामं यथासुखम् २
उमासहायो भगवान्यत्र नित्यं महेश्वरः ।
आस्ते शूली महातेजा नानाभूतगणावृतः ॥ ३
तत्र रुद्राश्च साध्याश्च विश्वेऽथ वसवस्तथा ।
यमश्च वरुणश्चैव कुबेरश्च सहानुगः ॥ ४

इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे सप्तमोऽध्यायः ॥ ७ ॥

८

**गिरेर्हिमवत इत्यष्टमे** तस्मै भगवते कृत्वा नम इत्यादि तत्सुवर्णमवाप्स्यसीत्यन्तम् । सुवर्णकामस्य जप्यं स्तोत्रम् । तस्य संवर्त ऋषिः हिरण्यबाहुरुग्रो देवता अनुष्टुप् छंदः अत्र शतं नामानि चतुर्थ्यन्तानि ॥ १ ॥

भूतानि च पिशाचाश्च
नासत्यावपि चाश्विनौ ।
गन्धर्वाप्सरसश्चैव
यक्षा देवर्षयस्तथा ॥ ५
आदित्या मरुतश्चैव यातुधानाश्च सर्वशः ।
उपासन्ते महात्मानं बहुरूपमुमापतिम् ॥ ६
रमते भगवांस्तत्र कुबेरानुचरैः सह ।
विकृतैर्विकृताकारैः क्रीडद्भिः पृथिवीपते ७
श्रिया ज्वलन् दृश्यते वै बालादित्यसमद्युतिः
न रूपं शक्यते तस्य संस्थानं वा कदाचन ८
निर्देष्टुं प्राणिभिः कैश्चित्प्राकृतैर्मांसलोचनैः ।
नोष्णं न शिशिरं तत्र न वायुर्न च भास्करः
न जरा क्षुत्पिपासे वा न मृत्युर्न भयं नृप ।
तस्य शैलस्य पार्श्वेषु सर्वेषु जयतां वर १०
धातवो जातरूपस्य रश्मयः सवितुर्यथा ।
रक्ष्यन्ते ते कुबेरस्य सहायैरुद्यतायुधैः ११
चिकीर्षद्भिः प्रियं राजन्कुबेरस्य महात्मनः ।
तस्मै भगवते कृत्वा नमः शर्वाय वेधसे१२
रुद्राय शितिकण्ठाय पुरुषाय सुवर्चसे ।
कपर्दिने करालाय हर्यक्ष्णे वरदाय च ॥ १३
त्र्यक्ष्णे पूष्णो दन्तभिदे वामनाय शिवाय च
याम्यायाव्यक्तरूपाय सद्वृत्ते शङ्कराय च १४
क्षेम्याय हरिकेशाय स्थाणवे पुरुषाय च ।
हरिनेत्राय मुण्डाय कुद्धायोत्तरणाय च ॥ १५
भास्कराय सुतीर्थाय देवदेवाय रंहसे ।
उष्णीषिणे सुवक्राय सहस्राक्षाय मीढुषे १६
गिरिशाय प्रशान्ताय यतये चीरवाससे ।
बिल्वदण्डाय सिद्धाय सर्वदण्डधराय च १७
मृगव्याधाय महते धन्विनेऽथ भवाय च ।
वराय सोमवक्त्राय सिद्धमन्त्राय चक्षुषे ॥१८
हिरण्यबाहवे राजन्नुग्राय पतये दिशाम् ।
लेलिहानाय गोष्ठाय सिद्धमन्त्राय वृष्णये १९
पशूनां पतये चैव भूतानां पतये नमः ।
वृषाय मातृभक्ताय सेनान्ये मध्यमाय च २०
स्रुवहस्ताय पतये धन्विने भार्गवाय च ।
अजाय कृष्णनेत्राय विरूपाक्षाय चैव ह ॥ २१
तीक्ष्णदंष्ट्राय तीक्ष्णाय वैश्वानरमुखाय च ।
+महाद्युतयेऽनङ्गाय सर्वाय पतये विशाम् २२
विलोहिताय दीप्ताय दीप्ताक्षाय महौजसे ।
वसुरेतःसुवपुषे पृथवे कृत्तिवाससे ॥ २३
कपालमालिने चैव सुवर्णमुकुटाय च ।
महादेवाय कृष्णाय त्र्यम्बकायानघाय च २४
क्रोधनायानृशंसाय मृदवे बाहुशालिने ।
दण्डिने तप्ततपसे तथैवाक्रूरकर्मणे ॥ २५
सहस्रशिरसे चैव सहस्रचरणाय च ।
नमः स्वधास्वरूपाय बहुरूपाय दंष्ट्रिणे ॥ २६
पिनाकिनं महादेवं महायोगिनमव्ययम् ।
त्रिशूलहस्तं वरदं त्र्यम्बकं भुवनेश्वरम् ॥ २७
त्रिपुरघ्नं त्रिनयनं त्रिलोकेशं महौजसम् ।
प्रभवं सर्वभूतानां धारणं धरणीधरम् ॥ २८
ईशानं शङ्करं सर्वं शिवं विश्वेश्वरं भवम् ।
उमापतिं पशुपतिं विश्वरूपं महेश्वरम् ॥ २९
विरूपाक्षं दशभुजं दिव्यगोवृषभध्वजम् ।
उग्रं स्थाणुं शिवं रौद्रं शर्वं गौरीशमीश्वरम् ३०
शितिकण्ठमजं शुक्रं पृथुं पृथुहरं वरम् ।
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥ ३१
प्रणम्य शिरसा देवमनंगाङ्गहरं हरम् ।
शरण्यं शरणं याहि महादेवं चतुर्मुखम् ३२
एवं कृत्वा नमस्तस्मै महादेवाय रंहसे ।
महात्मने क्षितिपते तत्सुवर्णमवाप्स्यसि ३३
सुवर्णमाहरिष्यन्तस्तत्र गच्छन्तु ते नराः ।
इत्युक्तः स वचस्तेन चक्रे कारन्धमात्मजः*
ततोऽतिमानुषं सर्वं चक्रे यज्ञस्य संविधिम् ।
सौवर्णानि च भाण्डानि सञ्चक्रुस्तत्र शिल्पिनः
बृहस्पतिस्तु तां श्रुत्वा मरुत्तस्य महीपतेः ।
समृद्धिमतिदेवेभ्यः सन्तापमकरोद्भृशम् ३६
स तप्यमानो वैवर्ण्यं कृशत्वं चागमत्परम् ।
भविष्यति हि मे शत्रुः संवर्तो वसुमानिति ॥
तं श्रुत्वा भृशसन्तप्तं देवराजो बृहस्पतिम् ।
अधिगम्यामरवृतः प्रोवाचेदं वचस्तदा ॥ ३८

इति श्रीमहाभारते आश्वमेधिके पर्वणि अश्वमेधपर्वणि संवर्तमरुत्तीये
अष्टमोऽध्यायः ॥ ८ ॥

इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे अष्टमोऽध्यायः ॥ ८ ॥ + 'महात्मने चानङ्गाय' इति पाठः । * गङ्गाधरं नमस्कृत्य लब्धवान्धनमुत्तमम् । कुबेर इव-तत्प्राप्य महादेवप्रसादतः । इत्यधिक श्लोकः ।

९

इन्द्र उवाच ।
कच्चित्सुखं स्वपिषि त्वं बृहस्पते
कच्चिन्मनोज्ञाः परिचारकास्ते ।
कच्चिद्देवानां सुखकामोऽसि विप्र
कच्चिद्देवास्त्वां परिपालयन्ति ॥ १
बृहस्पतिरुवाच ।
सुखं शये शयने देवराज
तथा मनोज्ञाः परिचारका मे ।
तथा देवानां सुखकामोऽस्मि नित्यं
देवाश्च मां सुभृशं पालयन्ति ॥ २
इन्द्र उवाच ।
कुतो दुःखं मानसं देहजं वा
पाण्डुर्विवर्णश्च कुतस्त्वमद्य ।
आचक्ष्व मे ब्राह्मण यावदेता-
न्निहन्मि सर्वांस्तव दुःखकर्तॄन् ॥ ३
बृहस्पतिरुवाच ।
मरुत्तमाहुर्मघवन् यक्ष्यमाणं
महायज्ञेनोत्तमदक्षिणेन ।
संवर्तो याजयतीति मे श्रुतं
तदिच्छामि न स तं याजयेत ॥ ४
इन्द्र उवाच ।
सर्वान्कामाननुयातोसि विप्र
यस्त्वं देवानां मन्त्रवित्सुपुरोधाः* ।
उभौ च ते जरामृत्यू व्यतीतौ
किं संवर्तस्तव कर्ताऽद्य विप्र ॥ ५
बृहस्पतिरुवाच ।
देवैः सह त्वमसुरान्प्रणुद्य
जिघांससे चाप्युत सानुबन्धान् ।
यं यं समृद्धं पश्यसि तत्र तत्र
दुःखं सपत्नेषु समृद्धिभावः ॥ ६
अतोऽस्मि देवेन्द्र विवर्णरूपः
सपत्नो मे वर्धते तन्निशम्य ।
सर्वोपायैर्मघवन्संनियच्छ
संवर्तं वा पार्थिवं वा मरुत्तम् ॥ ७
इन्द्र उवाच ।
एहि गच्छ प्रहितो जातवेदो
बृहस्पतिं परिदातुं मरुत्ते ।
अयं वै त्वां याजयिता बृहस्पति-
स्तथाऽमरं चैव करिष्यतीति ॥ ८
अग्निरुवाच ।
अहं गच्छामि मघवन्दूतोद्य+
बृहस्पतिं परिदातुं मरुत्ते ।
वाचं सत्यां पुरुहूतस्य कर्तुं
बृहस्पतेश्चापचितिं चिकीर्षुः ॥ ९
व्यास उवाच ।
ततः प्रायाद्धूमकेतुर्महात्मा
वनानि सर्वाणि× वीरुधश्चाप्यमृद्नन् ।
कामाद्धिमान्ते परिवर्तमानः
काष्ठातिगो मातरिश्वेव नर्दन् ॥ १०
मरुत्त उवाच ।
आश्चर्यमद्य पश्यामि रूपिणं वह्निमागतम् ।
आसनं सलिलं पाद्यं गां चोपानय वै मुने ११
अग्निरुवाच ।
आसनं सलिलं पाद्यं प्रतिनन्दामि तेऽनघ ।
इन्द्रेण तु समादिष्टं विद्धि मां दूतमागतम् १२
मरुत्त उवाच ।
कच्चिच्छ्रीमान्देवराजः सुखी च
कच्चिच्चास्मान्प्रीयते धूमकेतो ।
कच्चिद्देवा अस्य वशे यथाव-
त्प्रब्रूहि त्वं मम कार्त्स्न्येन देव ॥ १३
अग्निरुवाच ।
शक्रो भृशं सुसुखी पार्थिवेन्द्र
प्रीतिं चेच्छत्यजरां वै त्वया सः ।
देवाश्च सर्वे वशगास्तस्य राज-
न्संदेशं त्वं शृणु मे देवराज्ञः ॥ १४
यदर्थं मां प्राहिणोत्त्वत्सकाशं
बृहस्पतिं परिदातुं मरुत्ते ।
अयं गुरुर्याजयतां नृप त्वां
मर्त्यं सन्तममरं त्वां करोतु ॥ १५
मरुत्त उवाच ।
संवर्तोऽयं याजयिता द्विजो मां
बृहस्पतेरञ्जलिरेष तस्य ।
न चैवासौ याजयित्वा महेन्द्रं
मर्त्यं सन्तं याजयन्नद्य शोभेत ॥ १६

९
कच्चिदिति ॥ १ ॥ * मन्त्रयसे पुरोधाः इति पा०

+ 'अहं गच्छामि तव शक्राद्य दूतो' इति पा० × 'वनस्पतीन् वि०' इति पा०

अग्निरुवाच ।

ये वै लोका देवलोके महान्तः
संप्राप्स्यसे तान्देवराजप्रसादात् ।
त्वां चेदसौ याजयेद्वै बृहस्पति-
र्नूनं स्वर्गं त्वं जयेः कीर्तियुक्तः ॥ १७

तथा लोका मानुषा ये च दिव्याः
प्रजापतेश्चापि ये वै महान्तः ।
ते ते जिता देवराज्यं च कृत्स्नं
बृहस्पतिर्याजयेच्चेन्नरेन्द्र ॥ १८

संवर्त उवाच ।

मा स्मैव त्वं पुनरागाः कथञ्चित्
बृहस्पतिं परिदातुं मरुत्ते ।
मा त्वां धक्ष्ये चक्षुषा दारुणेन
संक्रुद्धोऽहं पावक त्वं निबोध ॥ १९

व्यास उवाच ।

ततो देवानगमद्धूमकेतु-
र्दाहाद्भीतो व्यथितोऽश्वत्थपर्णवत् ।
तं वै दृष्ट्वा प्राह शक्रो महात्मा
बृहस्पतेः सन्निधौ हव्यवाहम् ॥ २०

यस्त्वं गतः प्रहितो जातवेदो
बृहस्पतिं परिदातुं मरुत्ते ।
तत्किं प्राह स नृपो यक्ष्यमाणः
कच्चिद्वचः प्रतिगृह्णाति तच्च ॥ २१

अग्निरुवाच ।

न ते वाचं रोचयते मरुत्तो
बृहस्पतेरञ्जलिं प्राहिणोत्सः
संवर्तो मां याजयितेत्युवाच
पुनः पुनः स मया याच्यमानः ॥ २२

उवाचेदं मानुषा ये च दिव्याः
प्रजापतेर्ये च लोका महान्तः ।
तांश्चेल्लभेयं संविदं तेन कृत्वा
तथापि नेच्छेयमिति प्रतीतः ॥ २३

इन्द्र उवाच ।

पुनर्गत्वा पार्थिवं त्वं समेत्य
वाक्यं मदीयं प्रापय स्वार्थयुक्तम् ।
पुनर्यद्युक्तो न करिष्यते वच-
स्त्वत्तो वज्रं संप्रहर्तास्मि तस्मै ॥२४

अग्निरुवाच ।

गन्धर्वराड्यात्वयं तत्र दूतो
बिभेम्यहं वासव तत्र गन्तुम् ।
संरब्धो मामब्रवीत्तीक्ष्णरोषः
संवर्तो वाक्यं चरितब्रह्मचर्यः ॥ २५

यद्यागच्छेः पुनरेवं कथञ्चि-
द्बृहस्पतिं परिदातुं मरुत्ते ।
दहेयं त्वां चक्षुषा दारुणेन
संक्रुद्ध इत्येतदवैहि शक्र ॥ २६

शक्र उवाच ।

त्वमेवान्यान्दहसे जातवेदो
न हि त्वदन्यो विद्यते भस्मकर्ता ।
त्वत्संस्पर्शात्सर्वलोको बिभेति
अश्रद्धेयं वदसे हव्यवाह ॥ २७

अग्निरुवाच ।

दिवं देवेन्द्र पृथिवीं च सर्वां
संवेष्टयेस्त्वं स्वबलेनैव शक्र ।
एवंविधस्येह सतस्तवासौ
कथं वृत्रस्त्रिदिवं प्राग्जहार ॥ २८

इन्द्र उवाच ।

न गण्डिकाकारयोगं करेऽणुं
न चारिसोमं प्रपिबामि वह्ने ।
न क्षीणशक्तौ प्रहरामि वज्रं
को मेऽसुखाय प्रहरेत मर्त्यः ॥ २९

---

ब्रह्मविदां माहात्म्यं तदनुग्रहेण देवा अपि दासा भवंतीति नवमदशमयोरुक्तम् । तत्र नवमेनाहं दौर्बल्याद्वृत्रेण जित इति वक्तुं स्वसामर्थ्यामिंद्रो वन्हिं प्रति वदति न गंडिकाकारयोगं करेणुं नगं पर्वतं डीयते विहायसा गच्छतीति डीः पक्षी अल्पोडीर्डिका माक्षिका मशकादिस्तस्या आकारेण योगोस्या-स्तीत्येवं रूपम् अणुं सूक्ष्मं करे कुर्वे कृञ्छांदसं भौवादि-कत्वम् । करेणेति पाठे करोमीत्यध्याहारः पाथोधिं करे कर्तु-मगस्त्य इवाहं पर्वतमपि मशकीकर्तुं समर्थोऽस्मीत्यर्थः कुत-स्तर्हिं वृत्रस्त्वां नाराधितवानित्यत आह–**न चारिसोमं प्रपिबामि वह्ने** अरिसोमं शत्रुदत्तम् सोमम् त्वयैव स कुतो न निर्जित इत्यत आह–न क्षीणशक्तौ प्रहरामि वज्रमित्या-दिना न शंडिकां जंगमो नो करेणुरिति पाठे तु करेणुर्हस्ती मम ऐरावतः शंडिका युद्धं **द्रविडभाषाप्रसिद्धे** तां प्रति जंगमो गतिशीलो न भवतीति नो अस्ति ऐरावतवाहनस्य मे शत्रुजय ईषत्कर इत्यर्थः। शंडिकाशब्दस्तालव्यादिरिह ज्ञेयः इंद्रो हंति वृषभं शंडिकानामिति मंत्रवर्णात् दशमस्तूक्त-तात्पर्यः । शेषमतिरोहितार्थम् ॥ २९ ॥

अप्राजयेयं कालकेयान्पृथिव्या-
मपाकर्षन्दानवानन्तरिक्षात् ।
दिवः प्रह्लादमवसानमानयं
को मेऽसुखाय प्रहरेत मानवः ॥ ३०
अग्निरुवाच ।
यत्र शर्यातिं च्यवनो याजयिष्यन्
सहाश्विभ्यां सोममगृह्णदेकः ।
तं त्वं क्रुद्धः प्रत्यषेधीः पुरस्ता-
च्छर्यातियज्ञं स्मर तं महेन्द्र ॥ ३१
वज्रं गृहीत्वा च पुरन्दर त्वं
संप्राहार्षीश्च्यवनस्यातिघोरम् ।
स ते विप्रः सह वज्रेण बाहु-
मपागृह्णात्तपसा जातमन्युः ॥ ३२
ततो रोषात्सर्वतो घोररूपं
सपत्नं ते जनयामास भूयः ।
मदं नामासुरं विश्वरूपं
यं त्वं दृष्ट्वा चक्षुषी संन्यमीलः ॥ ३३
हनुरेका जगतीस्था तथैका
दिवं गता महतो दानवस्य ।
सहस्रं दन्तानां शतयोजनानां
सुतीक्ष्णानां घोररूपं बभूव ॥ ३४
वृत्ताः स्थूला रजतस्तंभवर्णा
दंष्ट्राश्चतस्रो द्वे शते योजनानाम् ।
स त्वां दन्तान्विदशन्नभ्यधाव-
ज्जिघांसया शूलमुद्यम्य घोरम् ॥ ३५
अपश्यस्त्वं तं तदा घोररूपं
सर्वे वै त्वां ददृशुर्दर्शनीयम् ।
यस्माद्भीतः प्राञ्जलिस्त्वं महर्षि-
मागच्छेथाः शरणं दानवघ्न ॥ ३६
क्षात्राद्बलाद्ब्रह्मबलं गरीयो
न ब्रह्मतः किञ्चिदन्यद्गरीयः ।
सोऽहं जानन् ब्रह्मतेजो यथाव-
न्न संवर्तं जेतुमिच्छामि शक्र ॥ ३७

इति श्रीमहाभारते आश्वमेधिके पर्वणि अश्वमेधपर्वणि संवर्तमरुत्तीये नवमोऽध्यायः ॥ ९ ॥

## १०

इन्द्र उवाच ।
एवमेतद्ब्रह्मबलं गरीयो
न ब्राह्मणात्किंचिदन्यद्गरीयः ।
आविक्षितस्य तु बलं न मृष्ये
वज्रमस्मै प्रहरिष्यामि घोरम् ॥ १
धृतराष्ट्र प्रहितो गच्छ मरुत्तं
संवर्तेन संगतं तं वदस्व ।
बृहस्पतिं त्वमुपशिक्षस्व राजन्
वज्रं वा ते प्रहरिष्यामि घोरम् ॥ २
व्यास उवाच ।
ततो गत्वा धृतराष्ट्रो नरेन्द्रं
प्रोवाचेदं वचनं वासवस्य ॥ ३
गन्धर्वं मां धृतराष्ट्रं निबोध
त्वामागतं वक्तुकामं नरेन्द्र ।
ऐन्द्रं वाक्यं श्रृणु मे राजसिंह
यत्प्राह लोकाधिपतिर्महात्मा ॥ ४
बृहस्पतिं याजकं त्वं वृणीष्व
वज्रं वा ते प्रहरिष्यामि घोरम् ।
वचश्चेदेतन्न करिष्यसे मे
प्राहैतदेतावदचिन्त्यकर्मा ॥ ५
मरुत्त उवाच ।
त्वं चैवैतद्वेत्थ पुरंदरश्च
विश्वेदेवा वसवश्चाश्विनौ च ।
मित्रद्रोहे निष्कृतिर्नास्ति लोके
महत्पापं ब्रह्महत्यासमं तत् ॥ ६

इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे नवमोऽध्यायः ॥ ९ ॥

१०

एवमिति ॥ १ ॥

## ५०

ब्रह्मोवाच ।

हन्त वः संप्रवक्ष्यामि यन्मां पृच्छथ सत्तमाः
गुरुणा शिष्यमासाद्य यदुक्तं तन्निबोधत ॥ १
समस्तमिह तच्छ्रुत्वा सम्यगेवावधार्यताम्।
अहिंसा सर्वभूतानामेतत्कृत्यतमं मतम् ॥
एतत्पदमनुद्विग्नं वरिष्ठं धर्मलक्षणम् ।
ज्ञानं निःश्रेय इत्याहुर्वृद्धा निश्चितदर्शिनः॥ ३
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्वकिल्बिषैः ।
हिंसापराश्च ये केचिद्ये च नास्तिकवृत्तयः ।
लोभमोहसमायुक्तास्ते वै निरयगामिनः ॥ ४
आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः
तेऽस्मिँल्लोके प्रमोदन्ते जायमानाः पुनः पुनः
कुर्वते ये तु कर्माणि श्रद्दधाना विपाश्चितः ।
अनाशीर्योगसंयुक्तास्ते धीराः साधुदर्शिनः
अतः परं प्रवक्ष्यामि सत्त्वक्षेत्रज्ञयोर्यथा ।
संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः ॥ ७
विषयो विषयित्वं च सम्बन्धोऽयमिहोच्यते
विषयी पुरुषो नित्यं सत्त्वं च विषयः स्मृतः
व्याख्यातं पूर्वकल्पेन मशकोदुम्बरं यथा ।
भुज्यमानं न जानीते नित्यं सत्त्वमचेतनम् ।
यस्त्वेवं तं विजानाति यो भुंक्ते यश्च भुज्यते९
नित्यं द्वन्द्वसमायुक्तं
सत्त्वमाहुर्मनीषिणः ।
निर्द्वन्द्वो निष्कलो नित्यः
क्षेत्रज्ञो निर्गुणात्मकः ॥ १०
समं संज्ञानुगश्चैव स सर्वत्र व्यवस्थितः ।
उपभुंक्ते सदा सत्त्वमपः पुष्करपर्णवत् ॥ ११
सर्वैरपि गुणैर्विद्वान् व्यतिषक्तो न लिप्यते ।
जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः ॥
एवमेवाप्यसंयुक्तः पुरुषः स्यान्न संशयः ।
द्रव्यमात्रमभूत्सत्त्वं पुरुषस्येति निश्चयः ॥ १३
यथा द्रव्यं च कर्ता च संयोगोप्यनयोस्तथा ।
यथा प्रदीपमादाय कश्चित्तमसि गच्छति ।
तथा सत्त्वप्रदीपेन गच्छन्ति परमैषिणः ॥ १४
यावद्द्रव्यं गुणस्तावत्प्रदीपः संप्रकाशते ।
क्षीणे द्रव्ये गुणे ज्योतिरन्तर्धानाय गच्छति

---

५०

पृष्टेष्वेतेषु पक्षेषु यद्धेयमुपादेयं च तत्संक्षेपेणाह—**हन्त व इति** ॥ १ ॥ विषयविषयिभावो घटचक्षुषोरिव न केवलं प्रकाश्यप्रकाशकभावः अपि तु भोज्यभोक्तृभावोप्यस्तीत्याह —**व्याख्यातमिति** सार्धेन । उदुंबरवत्सत्त्वं स्वात्मानं भोक्तारं च न वेत्ति भोक्ता तु मशकवदुभयं वेत्तीत्यर्थः । यो विजानीते स क्षेत्रज्ञ इत्युत्तरेणान्वयः ॥ ९ ॥ सत्त्वपुरुषयोः संबंधस्याध्यासिकत्वमाह—**नित्यमिति** । नित्यं सर्वदा सत्त्वं द्वंद्वैः सुखदुःखादिपरिणामैर्युक्तं गुणात्मकत्वात्सुखदुःखमोहात्मकं संहतं च तद्विपरीतत्वात् निर्द्वंद्वः नित्यः निष्कलो निर्गुणश्च पुरुषः अतस्तयोर्विषमस्वभावत्वान्न जतुकाष्ठादिवत् संबंधो युज्यते । यथोक्तं—

निःसंगस्य ससंगेन कूटस्थस्य विकारिणा ।
आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते ॥

इति ॥ १० ॥ कथं तर्हि तयोर्विषयविषयिभावसंबंध उक्त इत्याह—**सममिति** । यथा सर्वत्र स्वप्नमायेंद्रजालरज्जूरगादौ अध्यस्तं अधिष्ठानेन समं तुल्यं तदावरकमित्यर्थः अधिष्ठानं चाध्यस्तसंज्ञानुगतं तत्र स्वकीयसत्ता स्फूर्तिसमर्पकतया तदीयां संज्ञामनुसरत् दृश्यते तथा सत्त्वं पुरुषेण समं सत्त्वसंज्ञानुगतः पुरुषः उपभुंक्ते तत्र दृष्टांतः—**अप इति** । यथा पुष्करपर्णं अद्भिरसंसक्तमपि अपो भुंक्ते ताभिस्तस्याप्यायनात् । एवं सत्त्वेनावृतः पुरुषः सत्त्वसमानत्वं गतः सत्त्वधर्मान् आत्मन्यभिमन्वानः सत्त्वं भुंक्ते तथा चैवं कूटस्थविकारिणोरपि पुंप्रकृत्योराध्यासिकः संबंध उपपादितो भवति ॥ ११ ॥ प्रकारान्तरेण दृष्टान्तं विवृणोति—**सर्वैरिति** ॥ १२ ॥ समत्वमुपपादयति—**एवमिति** । सर्पेण रज्जुरिव सत्त्वेन असंयुक्तोऽपि पुरुषः स इति निश्चितमेव । तथापि सत्त्वं पुरुषश्च उभयं मिलित्वा द्रव्यमात्रं सत्त्वमात्रमभूत् । यथा रज्जुभुजंगौ मिलित्वा भुजंगमात्रं भवति तद्वत् इति निश्चयः। इदमेव तत्त्वं कल्पनान्तरं तु भ्रान्तिमात्रमिति भावः ॥१३॥ इदमेव द्वयोः सत्त्वमात्रत्वमनुसृत्य सत्त्वमेवात्मेति मन्यमाना बौद्धाःपुरुषमपलपंति तत्राह—**यथेति**। सत्त्वं पुरुषश्चेत्युभयं यथा द्रव्यमात्रमभूत्तथा द्रव्यं इदमर्थः कर्ताहमर्थः तयोः संयोगो दर्शनं चेति कृत्स्ना त्रिपुट्यपि द्रव्यमभूदित्यर्थः । कुतस्तर्हि द्रव्यात्पुरुषस्य पृथक्त्वमत आह—**प्रदीपेति** । यथा दीपेनैव दीपमन्यं च जानन्ति एवं सत्त्वस्य परिणामविशेषेण विद्याख्येन सत्त्वं पुरुषं च पृथक् जानीयादित्यर्थः ॥१४॥ द्रव्यं तैलं गुणो वर्तिः १५

व्यक्तः सत्त्वगुणस्त्वेवं पुरुषो व्यक्त इष्यते ।
एतद्विप्रा विजानीत हन्त भूयो ब्रवीमि वः
सहस्रेणापि दुर्मेधा न बुद्धिमधिगच्छति ।
चतुर्थेनाप्यथांशेन बुद्धिमान् सुखमेधते ॥ १७
एवं धर्मस्य विज्ञेयं संसाधनमुपायतः ।
उपायज्ञो हि मेधावी सुखमत्यन्तमश्नुते ॥ १८
यथाऽध्वानमपाथेयः प्रपन्नो मनुजः क्वचित् ।
क्लेशेन याति महता विनश्येदन्तरापि च १९
तथा कर्मसु विज्ञेयं फलं भवति वा न वा ।
पुरुषस्यात्मनिःश्रेयः शुभाशुभनिदर्शनम् ॥ २०
यथा च दीर्घमध्वानं पद्भ्यामेव प्रपद्यते ।
अदृष्टपूर्वं सहसा तत्त्वदर्शनवर्जितः ॥ २१
तमेव च यथाऽध्वानं रथेनेहाशुगामिना ।
गच्छत्यश्वप्रयुक्तेन तथा बुद्धिमतां गतिः॥ २२
ऊर्ध्वं पर्वतमारुह्य नान्ववेक्षेत भूतलम् ।
रथेन रथिनं पश्य क्लिश्यमानमचेतनम् ॥ २३
यावद्रथपथस्तावद्रथेन स तु गच्छति ।
क्षीणे रथपदे विद्वान् रथमुत्सृज्य गच्छति ॥
एवं गच्छति मेधावी तत्त्वयोगविधानवित् ।
परिज्ञाय गुणज्ञश्च उत्तरादुत्तरोत्तरम् ॥ २५
यथार्णवं महाघोरमप्लवः संप्रगाहते ।
बाहुभ्यामेव संमोहाद्वधं वाञ्छत्यसंशयम् ॥
नावा चापि यथा प्राज्ञो विभागज्ञः स्वरित्रया
अश्रान्तः सलिले गच्छेच्छीघ्रं सन्तरते ह्रदम्
तीर्णो गच्छेत्परं पारं नावमुत्सृज्य निर्ममः ।
व्याख्यातं पूर्वकल्पेन यथा रथपदातिनोः २८
स्नेहात्संमोहमापन्नो नावि दाशो यथा तथा
ममत्वेनाभिभूतः संस्तत्रैव परिवर्तते ॥ २९
नावं न शक्यमारुह्य स्थले विपरिवर्तितुम् ।
तथैव रथमारुह्य नाप्सु चर्या विधीयते ॥ ३०
एवं कर्मकृतं चित्रं विषयस्थं पृथक् पृथक् ।
यथा कर्म कृतं लोके तथैतानुपपद्यते ॥ ३१
यन्नैव गन्धिनो रस्यं न रूपस्पर्शशब्दवत् ।
मन्यन्ते मुनयो बुद्ध्या तत्प्रधानं प्रचक्षते ३२
तत्र प्रधानमव्यक्तमव्यक्तस्य गुणो महान् ।
महत्प्रधानभूतस्य गुणोऽहङ्कार एव च ॥ ३३
अहङ्कारात्तु संभूतो महाभूतकृतो गुणः ।
पृथक्त्वेन हि भूतानां विषया वै गुणाः स्मृताः
बीजधर्मं तथा व्यक्तं प्रसवात्मकमेव च ।
बीजधर्मा महानात्मा प्रसवश्चेति नः श्रुतम् ॥
बीजधर्मस्त्वहङ्कारः प्रसवश्च पुनः पुनः ।
बीजप्रसवधर्माणि महाभूतानि पञ्च वै ॥ ३६

---

दार्ष्टान्तिकमाह—**व्यक्त इति** । यथा तैलवर्तिभ्यामवष्टब्धो दीप आत्मानं भवनाकाशं च व्याप्नोति तदभावे तु स्वयमेवांतर्धीयते न तु भवनाकाशः एवं कर्मावष्टब्धः सत्त्वगुणश्चरमवृत्तिरूपोऽभिव्यक्तः सन् स्वं च पुरुषं च पृथगवभासयति कर्मोपरमे तु स्वयमेवान्तर्धीयते पुरुषस्तु अव्यक्तः समाधिसुषुप्तिसुखसाक्षी केवल इष्यते ॥ १६ ॥ कर्मसु ज्ञानसाधनेषु आत्मनि चित्ते श्रेयोविषये शुभाशुभदृष्टान्तः पूर्णे पुण्यपापे यः पूर्णं योगमाप्नोति अल्पपुण्यस्त्वंतरा म्रियते इति भावः ॥ २० ॥ **यथा चेति** । शास्त्ररथेनैव संसाराध्वातिलंघनीय इति भावः ॥२१॥ **ऊर्ध्वमिति** । परं पदमारुह्य शास्त्रमपि त्याज्यमिति भावः ॥२३॥ **यावदिति** । चित्तशुद्धिपर्यंतं विधिशास्त्रैकैंकर्यं ततस्तु योगतत्त्वं जानन् उत्तरोत्तरं हंसं परमहंसं वाऽऽश्रमं सम्यगवबुध्य गच्छेदित्यर्थः ॥ २४ ॥ आचार्यरूपां नावं श्रयेदित्याह त्रिभिः—**यथेति** ॥ २६ ॥ स्वरित्रया शोभनानि अरित्राणि केनिपातनानि यस्यां तया ॥२७॥**तीर्ण इति** । समावृत्तवत् निदिध्यासनार्थी गुरुमपि त्यजेदिति भावः । तावद्गुरुं सेवेत यावद्योगारूढो न भवति रथमिव पर्वतारूढ इति पूर्वदृष्टान्तं स्मारयति—**व्याख्यातमिति** । पदातिदृष्टान्तोऽपि गुर्वभावे मार्गप्राप्तिरेव न भवतीत्यत्र बोध्यः ॥ २८ ॥ **स्नेहादिति** । नात्यन्तं गुरावेव स्थेयं सति ध्यानयोग्यत्वे इति भावः ॥ २९ ॥ **नावमिति** । कर्माधिकारिणा योगो योगाधिकारिणा च कर्म नानुष्ठातुं युक्तं इति भावः ॥ ३० ॥ कर्मकृतं कर्मफलं चित्रं नानाविधं विषयस्थं पृथक् पृथक् एकमेव कर्म गृहस्थस्य श्लाघ्यं परिव्राजकस्य पातित्यहेतुः एवं व्यतिरेकोऽपि ज्ञेयः विषय आश्रमस्तत्स्थं एतान्कर्तॄन् ॥ ३१ ॥ एवं ज्ञानसाधनान्युक्त्वा ज्ञेयमाह—**यदिति** । गन्धि गन्धवत् रस्यं रसवत् ॥ ३२ ॥ गुणः कार्यं महद्रूपं यत्प्रधानभूतं प्रधानकार्यं तस्यापि गुणोऽहङ्कारः ॥ ३३ ॥ महाभूतकृतः वियदादिरूपत्वेन कल्पितः तेषां गुणास्तु विषयाः शब्दादय एव ॥ ३४ ॥ बीजधर्मत्वं कारणत्वं प्रसवात्मकत्वं कार्यरूपत्वं, जीवेति पाठेपि जीवतो धान्यादेरेव धर्मो बीजत्वं न तु भर्जितधान्यादेरिति स एवार्थः । यद्यपि तेषां मते अव्यक्तस्य बीजत्वमेवास्ति न तु कार्यत्वं तथापि अद्वैतश्रुतिविरोधात्तदुपेक्ष्यमिति भावः ॥ ३५ ॥ पुनःपुनरिति दाष्टसृष्टिरुक्ता ॥ ३६ ॥

बीजधर्मिण इत्याहुः प्रसवं च प्रकुर्वते ।
विशेषाः पञ्चभूतानां तेषां चित्तं विशेषणम्
तत्रैकगुणमाकाशं द्विगुणो वायुरुच्यते ।
त्रिगुणं ज्योतिरित्याहुरापश्चापि चतुर्गुणाः ॥
पृथ्वी पञ्च गुणा ज्ञेया चरस्थावरसंकुला ।
सर्वभूतकरी देवी शुभाशुभनिदर्शिनी ॥ ३९
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
एते पञ्च गुणा भूमेर्विज्ञेया द्विजसत्तमाः ॥ ४०
पार्थिवश्च सदा गन्धो गन्धश्च बहुधा स्मृतः ।
तस्य गन्धस्य वक्ष्यामि विस्तरेण बहून्गुणान्
इष्टश्चानिष्टगन्धश्च मधुरोऽम्लः कटुस्तथा ।
निर्हारी संहतः स्निग्धो रूक्षो विशद एव च॥
एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत ।
शब्दः स्पर्शस्तथा रूपं द्रवश्चापां गुणाः स्मृताः
रसज्ञानं तु वक्ष्यामि रसस्तु बहुधा स्मृतः ।
मधुरोऽम्लः कटुस्तिक्तः कषायो लवणस्तथा
एवं षड्विधविस्तारो रसो वारिमयः स्मृतः ।
शब्दः स्पर्शस्तथा रूपं त्रिगुणं ज्योतिरुच्यते ॥
ज्योतिषश्च गुणो रूपं रूपं च बहुधा स्मृतम्
शुक्लं कृष्णं तथा रक्तं नीलं पीतारुणं तथा ४६
ह्रस्वं दीर्घं कृशं स्थूलं चतुरस्रं तु वृत्तवत् ।
एवं द्वादशविस्तारं तेजसो रूपमुच्यते ॥ ४७
विज्ञेयं ब्राह्मणैर्वृद्धैर्धर्मज्ञैः सत्यवादिभिः ।
शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरुच्यते ४८
वायोश्चापि गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः
रूक्षः शीतस्तथैवोष्णः स्निग्धो विशद एव च
कठिनश्चिक्कणः श्लक्ष्णः
पिच्छिलो दारुणो मृदुः ।
एवं द्वादशविस्तारो
वायव्यो गुण उच्यते ॥ ५०
विधिवद्ब्राह्मणैः सिद्धैर्धर्मज्ञैस्तत्त्वदर्शिभिः ५१
तत्रैकगुणमाकाशं शब्द इत्येव च स्मृतः ।
तस्य शब्दस्य वक्ष्यामि विस्तरेण बहून्गुणान्
षड्जर्षभः स गान्धारो मध्यमः पञ्चमस्तथा ।
अतः परं तु विज्ञेयो निषादो धैवतस्तथा ।
इष्टश्चानिष्टशब्दश्च संहतः प्रविभागवान् ५३
एवं दशविधो ज्ञेयः शब्द आकाशसम्भवः ।
आकाशमुत्तमं भूतमहङ्कारस्ततः परः ॥ ५४
अहङ्कारात्परा बुद्धिर्बुद्धेरात्मा ततः परः ।
तस्मात्तु परमव्यक्तमव्यक्तात्पुरुषः परः ॥ ५५
परापरज्ञो भूतानां विधिज्ञः सर्वकर्मणाम् ।
सर्वभूतात्मभूतात्मा गच्छत्यात्मानमव्ययम्५६

इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतापर्वणि गुरुशिष्यसंवादे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

## ५१

ब्रह्मोवाच ।
भूतानामथ पञ्चानां यथैषामीश्वरं मनः ।
नियमे च विसर्गे च भूतात्मा मन एव च १
अधिष्ठाता मनो नित्यं भूतानां महतां तथा ।
बुद्धिरैश्वर्यमाचष्टे क्षेत्रज्ञश्च स उच्यते ॥ २

बीजधर्मिण इति तामेवोपपादयति । विशेषाः शब्दादयः प्रसवं प्रकुर्वते भोगकाले कार्यरूपेण उपस्थिता अपि संस्काररूपेण कालान्तरे भोगं दातुं कारणात्मनाऽवतिष्ठन्ते । अत एते कारणरूपाश्च कार्यं सर्वदा कुर्वन्ति पूर्वेषां मृद्घटन्यायेन कार्यकारणभावः । विशेषाणां तु बीजाङ्कुरन्यायेनेति भेदः । तेषां विशेषाणामपि विशेषणं व्यावर्तकं चित्तमेव । चित्त एव विशेषाः सर्वे सन्ति न बहिरित्यर्थः ॥३७॥ तत्रैकगुणमित्यादिग्रन्थो व्याख्यातो मोक्षधर्मेषु स्पष्टार्थश्च ॥ ३८ ॥ इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे पंचाशतमोऽध्यायः ॥ ५० ॥

५१

विशेषाः पञ्चभूतानामित्यत्र सूत्रितां सकलशास्त्ररहस्यभूतां दृष्टिसृष्टिं प्रपंचयति—**भूतानामित्यादिना** । नियमे संहारे विसर्गे उत्पत्तौ च भूतानां मन एव ईश्वरं समर्थं यथा तथा वक्ष्यत इति शेषः। भूतात्मा स्थितिकालेऽपि मन एव भूतानामात्मा स्वरूपं कनकमिव कुण्डलादेः ॥१॥ आधिष्ठाता निमित्तकारणमपि कुलालादिस्थानीयं मन एव क्षेत्रज्ञो जीवोऽपि मन एव एवं मनस ऐश्वर्यं बुद्धिर्विवेकजा प्रज्ञैव आचष्टे स्वप्रतीतिग्राह्यं मनस ऐश्वर्यमित्यर्थः ॥ २ ॥

इन्द्रियाणि मनो युंक्ते सदश्वानिव सारथिः।
इन्द्रियाणि मनो बुद्धिः क्षेत्रज्ञे युज्यते सदा ३
महदश्वसमायुक्तं बुद्धिसंयमनं रथम्।
समारुह्य स भूतात्मा समन्तात्परिधावति ४
इन्द्रियग्रामसंयुक्तो मनःसारथिरेव च।
बुद्धिसंयमनो नित्यं महान्ब्रह्ममयो रथः॥ ५
एवं यो वेत्ति विद्वान्वै सदा ब्रह्ममयं रथम्।
स धीरः सर्वभूतेषु न मोहमधिगच्छति॥ ६
अव्यक्तादि विशेषान्तं सह स्थावरजङ्गमम्।
सूर्यचन्द्रप्रभालोकं ग्रहनक्षत्रमण्डितम्॥ ७
नदीपर्वतजालैश्च सर्वतः परिभूषितम्।
विविधाभिस्तथा चाद्भिः सततं समलंकृतम्
आजीवं सर्वभूतानां सर्वप्राणभृतां गतिः।
एतद्ब्रह्मवनं नित्यं तस्मिंश्चरति क्षेत्रवित्॥ ९
लोकेऽस्मिन्यानि सत्त्वानि
त्रसानि स्थावराणि च।
तान्येवाग्रे प्रलीयन्ते
पश्चाद्भूतकृता गुणाः।
गुणेभ्यः पञ्चभूतानि
एष भूतसमुच्छ्रयः॥ १०
देवा मनुष्या गन्धर्वाः
पिशाचासुरराक्षसाः।
सर्वे स्वभावतः सृष्टा
न क्रियाभ्यो न कारणात्॥ ११
एते विश्वसृजो विप्रा
जायन्तीह पुनः पुनः।
तेभ्यः प्रसूतास्तेष्वेव
महाभूतेषु पञ्चसु।
प्रलीयन्ते यथाकाल-
मूर्मयः सागरे यथा॥ १२
विश्वसृग्भ्यस्तु भूतेभ्यो
महाभूतास्तु सर्वशः।
भूतेभ्यश्चापि पञ्चभ्यो
मुक्तो गच्छेत्परां गतिम्॥ १३
प्रजापतिरिदं सर्वं मनसैवासृजत्प्रभुः।
तथैव देवानृषयस्तपसा प्रतिपेदिरे॥ १४
तपसश्चानुपूर्व्येण फलमूलाशिनस्तथा।
त्रैलोक्यं तपसा सिद्धाः पश्यन्तीह समाहिताः
औषधान्यगदादीनि नानाविद्याश्च सर्वशः।
तपसैव प्रसिद्ध्यन्ति तपोमूलं हि साधनम् १६
यद्दुरापं दुराम्नायं दुराधर्षं दुरन्वयम्।
तत्सर्वं तपसा साध्यं 'तपो हि दुरतिक्रमम्'॥१७
सुरापो ब्रह्महा स्तेयी भ्रूणहा गुरुतल्पगः।
तपसैव सुतप्तेन मुच्यते किल्बिषात्ततः॥ १८

---

मनस ऐश्वर्यं योगैकगम्यमिति तदधिगमार्थं योगमाह— **इन्द्रियाणीति**। मनः कर्तृ युंक्ते प्रयुंक्ते। आत्मेन्द्रियमनोयुक्तं भोक्तेति श्रुतिं व्याचष्टे—**इन्द्रियाणीति**। आत्मपदस्य प्रतिपदं बुद्धिपदं भोक्तेत्यस्य प्रतिपदं क्षेत्रज्ञ इति॥ ३॥ महान्तः इन्द्रियाश्वास्तैः समायुक्तं, बुद्ध्या सारथिभूतया संयमनं निग्रहो यस्य तं, रथं ब्रह्ममयं कारणविकारभूतं शरीररथम्। भूतात्मा देहाभिमानी,सर्वतः सुखलिप्सुर्धावति॥ ४॥ अयमेव रथ इन्द्रियग्रामेण वशीकृतेन संयुक्तः सम्यक् समाहितः। मनसा च सारथिना संयुक्तः बुद्धिसंयमनः बुद्धिप्रतोदश्चेन्महान् भवति। बहिर्मुखानीन्द्रियबुद्धिमनांसि आत्मनो जीवत्वमापादयन्ति अन्तर्मुखानि त्वस्य ब्रह्ममयत्वं आविष्कुर्वन्तीत्यर्थः॥ ५॥ एवं निग्राह्यत्वेन यो वेत्ति वेद धीरो ध्यानशीलः॥ ६॥ अव्यक्ताद्यात्मके ब्रह्मवनेऽस्मिन् चेतनः संचरतीत्याह-**अव्यक्तेति त्रिभिः**॥७॥ अस्मिँल्लोके आत्मलोके अग्रे निमेषमात्रेण स्थावरादिकं बाह्यं सर्वं लीयते। नेत्रनिमीलनमात्रेण भूतानि प्रलीयन्ते दृष्टिसृष्ट्यधिकारादित्यर्थः। तदनन्तरं भूतकृताः गुणाः शब्दादयो लीयन्ते नेत्रवत् श्रोत्रादीनामपि गुरूक्तयुक्त्या निमीलने कृते सतीत्यर्थः। गुणेभ्यः लीनेभ्योऽनन्तरं पञ्चभूतानि सूक्ष्मदेहारंभकाणि प्रलीयन्ते स्थूलानां प्रत्याहारेणैव संहृतत्वात्। एष देहद्वयरूपो भूतसमुच्छ्रय इति पञ्चभूतानीत्यस्य व्याख्या भूतानां लये तु निर्विशेषचिन्मात्रेणैव रूपेणावतिष्ठत इत्यर्थः। सार्धश्लोकः॥ १०॥ देवादयः स्वाप्नदेवादिवत्स्वभावत एव उत्पन्नाः न यज्ञादिना नापि ब्रह्मादिनेत्याह—**देवा इति**॥ ११॥ विश्वसृजो मरीच्यादयोपि भौतिकत्वाद्भूतलये लयिन्त इत्याह—**एत इति सार्धेन**॥ १२॥ विश्वसृग्भ्यः स्थूलभूतेभ्यः परे महाभूताः सूक्ष्मभूतानि तेभ्योऽपि परां गतिं मुक्तो गच्छेत्। पाठान्तरे भूतानां यो विश्वसृक् विराट् सः स्वोपादानभूतानि महाभूतानि प्रति गच्छतीति स एवार्थः॥ १३॥

मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः।

इत्युक्तलक्षणतपोबलेन सर्वं मनसैव सृज्यत इत्याह— **प्रजापतिरित्यादिना**॥ १४॥ तपसः संकल्पस्य आनुपूर्व्येण क्रमेण समाहिताः समाधियुक्ताः॥ १५॥ दुरापं इन्द्रपदादि दुराम्नायं वेदादि दुराधर्षं वह्न्यादि दुरन्वयं असमाधेयं महाप्रलयादि॥ १७॥

मनुष्याः पितरो देवाः
पशवो मृगपक्षिणः ।
यानि चान्यानि भूतानि
त्रसानि स्थावराणि च ॥ १९
तपःपरायणा नित्यं सिद्ध्यन्ते तपसा सदा ।
तथैव तपसा देवा महामाया दिवं गताः २०
आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः।
अहङ्कारसमायुक्तास्ते सकाशे प्रजापतेः॥ २१
ध्यानयोगेन शुद्धेन निर्ममा निरहंकृताः ।
आप्नुवन्ति महात्मानो महान्तं लोकमुत्तमम्
ध्यानयोगमुपागम्य प्रसन्नमतयः सदा ।
सुखोपचयमव्यक्तं प्रविशन्त्यात्मवित्तमाः॥२३
ध्यानयोगादुपागम्य निर्ममा निरहङ्कृताः।
अव्यक्तं प्रविशन्तीह महतां लोकमुत्तमम् २४
अव्यक्तादेव सम्भूतः
समसंज्ञां गतः पुनः ।
तमोरजोभ्यां निर्मुक्तः
सत्त्वमास्थाय केवलम् ॥ २५
निर्मुक्तः सर्वपापेभ्यः सर्वं सृजति निष्कलम्
क्षेत्रज्ञ इति तं विद्याद्यस्तं वेद स वेदवित् २६
चित्तं चित्तादुपागम्य मुनिरासीत संयतः ।
यच्चित्तं तन्मयो वश्यं गुह्यमेतत्सनातनम्॥२७
अव्यक्तादिविशेषान्तमविद्यालक्षणं स्मृतम् ।
निबोधत तथा हीदं गुणैर्लक्षणमित्युत ॥ २८
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् २९
कर्म केचित्प्रशंसन्ति मन्दबुद्धिरता नराः ।
ये तु वृद्धा महात्मानो न प्रशंसन्ति कर्म ते ॥
कर्मणा जायते जन्तुर्मूर्तिमान्षोडशात्मकः ।
पुरुषं ग्रसते विद्या तद्ग्राह्यममृताशिनाम् ॥ ३१
तस्मात्कर्मसु निःस्नेहा ये केचित्पारदर्शिनः ।
विद्यामयोऽयं पुरुषो न तु कर्ममयः स्मृतः॥३२
य एवममृतं नित्यमग्राह्यं शश्वदक्षरम् ।
वश्यात्मानमसंश्लिष्टं यो वेद न मृतो भवेत् ॥
अपूर्वमकृतं नित्यं य एनमविचारिणम् ।
य एवं विन्देदात्मानमग्राह्यममृताशनम् ।
अग्राह्योऽमृतो भवति स एभिः कारणैर्ध्रुवः ॥
आयोज्य सर्वसंस्कारान्संयम्यात्मानमात्मनि
स तद्ब्रह्म शुभं वेत्ति यस्माद्भूयो न विद्यते ३५
प्रसादे चैव सत्त्वस्य प्रसादं समवाप्नुयात् ।
लक्षणं हि प्रसादस्य यथा स्यात्स्वप्नदर्शनम् ॥
गतिरेषा तु मुक्तानां ये ज्ञानपरिनिष्ठिताः ।
प्रवृत्तयश्च याः सर्वाः पश्यन्ति परिणामजाः
एषा गतिर्विरक्तानामेष धर्मः सनातनः ।
एषा ज्ञानवतां प्राप्तिरेतद्वृत्तमनिन्दितम् ॥ ३८

---

**सुखोपचयं** लौकिकानां सुखानां उपचयो वृद्धिर्यस्मात्तं सुखोपचयं अखण्डमानन्दं एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतिप्रसिद्धम् ॥ २३ ॥ उपागम्य परावृत्य पूर्णं ध्यानयोगमप्राप्य ये म्रियन्ते ते प्रकृतिलीना भवन्तीति ॥ २४ ॥ समसंज्ञां गतः स्वयमव्यक्तत्वं प्राप्त इत्यर्थः ॥ २५ ॥ यः कारणत्वं प्राप्तः सर्वं सृजति तमेव निष्कलं क्षेत्रज्ञं ईश्वरमिति विद्यात् ॥ २६ ॥ चित्तं सम्यग्ज्ञानं चिती संज्ञान इत्यस्माद्भावे निष्ठा । चित्तान्मनसा हेतुना उपागम्य प्राप्य संयतः सततं आसीत ततश्च यच्चित्तस्तन्मयो भवति कीटकभृंगन्यायेन यद्रूपं भावयति तदेवायं भवतीत्यर्थः ( मन इति पाठे यच्चित्तं तदेव ईश्वरस्तद्भाव्यं दातुं समर्थ इत्यर्थः ) ॥२७॥ तत्र हानार्थमाह-**अव्यक्तादीति** । यत्किंचिन्मदीयत्वेन कल्पितं तत्सर्वमविद्या अतो निष्कलमात्मानमेव ध्यायेदित्यर्थः ॥२८॥ षोडशात्मकः पञ्चमहाभूतानि एकादशविकाराश्च तदात्मकः तमेव षोडशात्मकं पुरुषं विद्या ग्रसते तदेव च ग्राह्यं उपादेयं अमृतं देवतादिशेषं अश्नन्ति तेऽमृताशिनस्तेषां आशिताशितमिति पाठे तृप्तानामपि तृप्तिकरम् ॥ ३१ ॥ शश्वदक्षरं सर्वदा अपचयहीनं वश्यात्मा जितचित्तः असंश्लिष्टं असंगम् ॥३३॥ अपूर्वं मानान्तरानवगतं अकृतं अकृत्रिमं अविचारिणं कूटस्थं अपराजितमिति पाठान्तरे स्पष्टोऽर्थः । अमृताशनं ईश्वरग्रासस्तुरीय इति श्रुतेः ईश्वरस्यापि संहर्तारं एभिर्वक्ष्यमाणैः । सार्धः ॥ ३४ ॥ चेतसः संस्कारा मैत्र्यादयस्तान् आयोज्य दृढान् कृत्वा आत्मानं चित्तं आत्मनि हृदयपुंडरीके संयम्य निरुध्य ॥ ३५ ॥ प्रसादे नैर्मल्ये प्रसादं शान्तिं चित्तप्रसादस्य लक्षणं तु यथा स्वप्ने देहासंगेनावस्थानमस्ति तथा यदा योगयुक्त्या चित्तं बहिःसंज्ञाशून्यमन्तःप्रचारि भवति तदेव प्रसादाच्चिह्नम् ॥ ३६ ॥ एषा प्रसादरूपा गतिर्मार्गः प्रवर्तन्ते ताः प्रवृत्तयः त्रैकालिकाः पदार्थास्तान्परिणामजान् अतीताननागतांश्चात्र पश्यन्ति योगिनः ॥ ३७ ॥

समेन सर्वभूतेषु निःस्पृहेण निराशिषा।
शक्या गतिरियं गन्तुं सर्वत्र समदर्शिना ३९
एतद्वः सर्वमाख्यातं मया विप्रर्षिसत्तमाः।
एवमाचरत क्षिप्रं ततः सिद्धिमवाप्स्यथ ४०

गुरुरुवाच।

इत्युक्तास्ते तु मुनयो गुरुणा ब्रह्मणा तथा।
कृतवन्तो महात्मानस्ततो लोकमवाप्नुवन् ४१
त्वमप्येतन्महाभाग मयोक्तं ब्रह्मणो वचः।
सम्यगाचर शुद्धात्मंस्ततः सिद्धिमवाप्स्यसि॥

वासुदेव उवाच।

इत्युक्तः स तदा शिष्यो गुरुणा धर्ममुत्तमम्
चकार सर्वं कौन्तेय ततो मोक्षमवाप्तवान्॥
कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह।
तत्पदं समनुप्राप्तो यत्र गत्वा न शोचति॥४४

अर्जुन उवाच।

को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन
श्रोतव्यं चेन्मयैतद्वै तत्त्वमाचक्ष्व मे विभो ४५

वासुदेव उवाच।

अहं गुरुर्महाबाहो मनः शिष्यं च विद्धि मे।
त्वत्प्रीत्या गुह्यमेतच्च कथितं ते धनञ्जय॥ ४६
मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह।
अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत४७
ततस्त्वं सम्यगाचीर्णे धर्मेऽस्मिन्नरिकर्षण।
सर्वपापविनिर्मुक्तो मोक्षं प्राप्स्यसि केवलम्
पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते।
मया तव महाबाहो तस्मादत्र मनः कुरु॥ ४९
मया तु भरतश्रेष्ठ चिरदृष्टः पिता प्रभुः।
तमहं द्रष्टुमिच्छामि संमते तव फाल्गुन॥५०

वैशम्पायन उवाच।

इत्युक्तवचनं कृष्णं प्रत्युवाच धनञ्जयः।
गच्छावो नगरं कृष्ण गजसाह्वयमद्य वै॥ ५१
समेत्य तत्र राजानं धर्मात्मानं युधिष्ठिरम्।
समनुज्ञाप्य राजानं स्वां पुरीं यातुमर्हसि ५२

इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतापर्वणि गुरुशिष्यसंवादे
एकपञ्चाशत्तमोऽध्यायः॥ ५१॥

गुरुशिष्यसंवादः समाप्तः।

## ५२

वैशम्पायन उवाच।

ततोऽभ्यनोदयत्कृष्णो युज्यतामिति दारुकम्
मुहूर्तादिव चाचष्ट युक्तमित्येव दारुकः॥ १
तथैव चानुयात्रादि चोदयामास पाण्डवः।
सज्जयध्वं प्रयास्यामो नगरं गजसाह्वयम् २
इत्युक्ताः सैनिकास्ते तु सज्जीभूता विशाम्पते।
आचख्युः सज्जमित्येवं पार्थायामिततेजसे ३
ततस्तौ रथमास्थाय प्रयातौ कृष्णपाण्डवौ।
विकुर्वाणौ कथाश्चित्राः प्रीयमाणौ विशाम्पते
रथस्थं तु महातेजा वासुदेवं धनञ्जयः।
पुनरेवाब्रवीद्वाक्यमिदं भरतसत्तम॥ ५
त्वत्प्रसादाज्जयः प्राप्तो राज्ञा वृष्णिकुलोद्वह।
नियताः शत्रवश्चापि प्राप्तं राज्यमकण्टकम् ६
नाथवन्तश्च भवता पाण्डवा मधुसूदन।
भवन्तं प्लवमासाद्य तीर्णाः स्म कुरुसागरम्
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसत्तम।
तथा त्वामभिजानामि यथा चाहं भवान्मतः८

---

**अहमिति**। अहं क्षेत्रज्ञो गुरुः मनोमदीयं मया बोधनीयं एतेन आत्मनो गुरुरात्मैवेत्युक्तं भवति॥ ४६॥ सम्यगाचर यमानियमादिनिष्ठो भव॥४७॥ केवलमिति क्रममुक्तिव्यावृत्तिः॥ ४८॥ प्रागुक्तं स्मारयति अस्य च तस्य च एकवाक्यतां कारयितुम्—**पूर्वमिति**॥ ४९॥ कथामनुसंधत्ते—**मया त्वित्यादिना**॥ ५०॥ इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे एकपञ्चाशत्तमोऽध्यायः॥ ५१॥

५२

**तत इति**। रथ इति रथमिति चार्धद्वयेपि शेषः॥ १॥ विश्वकर्मन्नित्यादिना स्वबोधमाविष्करोति॥ ८॥

त्वत्तेजःसम्भवो नित्यं भूतात्मा मधुसूदन ।
रतिः क्रीडामयी तुभ्यं माया ते रोदसी विभो
त्वयि सर्वमिदं विश्वं यदिदं स्थाणु जङ्गमम् ।
त्वं हि सर्वं विकुरुषे भूतग्रामं चतुर्विधम् १०
पृथिवीं चान्तरिक्षं च द्यां चैव मधुसूदन ।
हसितं तेऽमला ज्योत्स्ना ऋतवश्चेन्द्रियाणि ते
प्राणा वायुः सततगः क्रोधो मृत्युः सनातनः
प्रसादे चापि पद्मा श्रीर्नित्यं त्वयि महामते॥
रतिस्तुष्टिर्धृतिः क्षान्तिर्मतिः कान्तिश्चराचरं
त्वमेवेह युगान्तेषु निधनं प्रोच्यसेऽनघ ॥ १३
सुदीर्घेणापि कालेन न ते शक्या गुणा मया।
आत्मा च परमात्मा च नमस्ते नलिनेक्षण ॥
विदितो मे सुदुर्धर्ष नारदाद्देवलात्तथा ।
कृष्णद्वैपायनाच्चैव तथा कुरुपितामहात् ॥ १५
त्वयि सर्वं समासक्तं त्वमेवैको जनेश्वरः ।
यच्चानुग्रहसंयुक्तमेतदुक्तं त्वयाऽनघ ॥ १६
एतत्सर्वमहं सम्यगाचरिष्ये जनार्दन ।
इदं चाद्भुतमत्यन्तं कृतमस्मत्प्रियेप्सया ॥ १७
यत्पापो निहतः संख्ये कौरव्यो धृतराष्ट्रजः ।
त्वया दग्धं हि तत्सैन्यं मया विजितमाहवे
भवता तत्कृतं कर्म येनावाप्तो जयो मया।
दुर्योधनस्य संग्रामे तव बुद्धिपराक्रमैः ॥ १९
कर्णस्य च वधोपायो यथावत्सम्प्रदर्शितः ।
सैन्धवस्य च पापस्य भूरिश्रवस एव च २०
अहं च प्रीयमाणेन त्वया देवकिनन्दन ।
यदुक्तस्तत्करिष्यामि न हि मेऽत्र विचारणा॥
राजानं च समासाद्य धर्मात्मानं युधिष्ठिरम्
चोदयिष्यामि धर्मज्ञ गमनार्थं तवानघ ॥ २२
रुचितं हि ममैतत्ते द्वारकागमनं प्रभो ।
अचिरादेव द्रष्टा त्वं मातुलं मे जनार्दन ॥ २३
बलदेवं च दुर्धर्षं तथाऽन्यान्वृष्णिपुङ्गवान् ।
एवं सम्भाषमाणौ तौ प्राप्तौ वारणसाह्वयम्
तथा विविशतुश्चोभौ सम्प्रहृष्टनराकुलम् ।
तौ गत्वा धृतराष्ट्रस्य गृहं शक्रगृहोपमम् ॥ २५
ददृशाते महाराज धृतराष्ट्रं जनेश्वरम् ।
विदुरं च महाबुद्धिं राजानं च युधिष्ठिरम् ॥
भीमसेनं च दुर्धर्षं माद्रीपुत्रौ च पाण्डवौ ।
धृतराष्ट्रमुपासीनं युयुत्सुं चापराजितम् ॥ २७
गान्धारीं च महाप्रज्ञां पृथां कृष्णां च भामिनीं
सुभद्राद्याश्च ताः सर्वा भरतानां स्त्रियस्तथा ॥
ददृशाते स्त्रियः सर्वा गान्धारीपरिचारिकाः
ततः समेत्य राजानं धृतराष्ट्रमरिन्दमौ ॥ २९
निवेद्य नामधेये स्वे तस्य पादावगृह्णताम्।
गान्धार्याश्च पृथायाश्च धर्मराजस्य चैव हि ॥
भीमस्य च महात्मानौ तथा पादावगृह्णताम्
क्षत्तारं चापि संगृह्य पृष्ट्वा कुशलमव्ययम् ३१
तैः सार्धं नृपतिं वृद्धं ततस्तौ पर्युपासताम् ।
ततो निशि महाराजो धृतराष्ट्रः कुरूद्वहान् ३२
जनार्दनं च मेधावी व्यसर्जयत वै गृहान् ।
तेऽनुज्ञाता नृपतिना ययुः स्वं स्वं निवेशनम् ॥
धनञ्जयगृहानेव ययौ कृष्णस्तु वीर्यवान् ।
तत्रार्चितो यथान्यायं सर्वकामैरुपस्थितः ३४
कृष्णः सुष्वाप मेधावी धनञ्जयसहायवान् ।
प्रभातायां तु शर्वर्यां कृत्वा पौर्वाह्णिकीं क्रियाम्
धर्मराजस्य भवनं जग्मतुः परमार्चितौ ।
यत्रास्ते स सहामात्यो धर्मराजो महाबलः ३६
तौ प्रविश्य महात्मानौ तद्गृहं परमार्चितम् ।
धर्मराजं ददृशतुर्देवराजमिवाश्विनौ ॥ ३७
समासाद्य तु राजानं वार्ष्णेयकुरुपुङ्गवौ ।
निषेदतुरनुज्ञातौ प्रीयमाणेन तेन तौ ॥ ३८
ततः स राजा मेधावी विवक्षू प्रेक्ष्य तावुभौ ।
प्रोवाच वदतां श्रेष्ठो वचनं राजसत्तमः ॥ ३९

युधिष्ठिर उवाच ।

विवक्षू हि युवां मन्ये वीरौ यदुकुरूद्वहौ ।
ब्रूत कर्तास्मि सर्वं वां न चिरान्मा विचार्यताम्
इत्युक्तः फाल्गुनस्तत्र धर्मराजानमब्रवीत् ।
विनीतवदुपागम्य वाक्यं वाक्यविशारदः ४१
अयं चिरोषितो राजन् वासुदेवः प्रतापवान् ।
भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ॥ ४२
स गच्छेदभ्यनुज्ञातो भवता यदि मन्यसे ।
आनर्तनगरीं वीरस्तदनुज्ञातुमर्हसि ॥ ४३

युधिष्ठिर उवाच ।

पुण्डरीकाक्ष भद्रं ते गच्छ त्वं मधुसूदन ।
पुरीं द्वारवतीमद्य द्रष्टुं शूरसुतं प्रभो ॥ ४४
रोचते मे महाबाहो गमनं तव केशव ।
मातुलश्चिरदृष्टो मे त्वया देवी च देवकी ४५

रतिः रमणं क्रीडामयी सर्गस्थित्यन्तलीलारूपा तुभ्यं तव रोदसी द्यावापृथिवी ते तव माया ॥ ९ ॥ अनुग्रहः एतत्सम्यगाचरेत्याज्ञारूपः ॥ १६ ॥ दृष्टोपकारमप्यभिनन्दति इदं चेति ॥ १७ ॥

समेत्य मातुलं गत्वा बलदेवं च मानद ।
पूजयेथा महाप्राज्ञ मद्वाक्येन यथार्हतः ॥ ४६
स्मरेथाश्चापि मां नित्यं भीमं च बलिनां वरम्
फाल्गुनं सहदेवं च नकुलं चैव मानद ॥ ४७
आनर्तानवलोक्य त्वं पितरं च महाभुज ।
वृष्णींश्च पुनरागच्छेर्हयमेधे ममानघ ॥ ४८
स गच्छ रत्नान्यादाय विविधानि वसूनि च ।
यच्चाप्यन्यन्मनोज्ञं ते तदप्यादत्स्व सात्वत ॥
इयं च वसुधा कृत्स्ना प्रसादात्तव केशव ।
अस्मानुपगता वीर निहताश्चापि शत्रवः ॥५०
एवं ब्रुवति कौरव्ये धर्मराजे युधिष्ठिरे ।
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ ५१
तवैव रत्नानि धनं च केवलं
धरा तु कृत्स्ना तु महाभुजाद्य वै ।
यदस्ति चान्यद्द्रविणं गृहे मम
त्वमेव तस्येश्वर नित्यमीश्वरः ॥ ५२
तथेत्यथोक्तः प्रतिपूजितस्तदा
गदाग्रजो धर्मसुतेन वीर्यवान् ।
पितृष्वसारं त्ववदद्यथाविधि
संपूजितश्चाप्यगमत्प्रदक्षिणम् ॥ ५३
तया स सम्यक् प्रतिनन्दितस्तत-
स्तथैव सर्वैर्विदुरादिभिस्तथा ।
विनिर्ययौ नागपुराद्गदाग्रजो
रथेन दिव्येन चतुर्भुजः स्वयम् ॥ ५४
रथे सुभद्रामधिरोप्य भाविनीं
युधिष्ठिरस्यानुमते जनार्दनः ।
पितृष्वसुश्चापि तथा महाभुजो
विनिर्ययौ पौरजनाभिसंवृतः ॥ ५५
तमन्वयाद्वानरवर्यकेतनः
स सात्यकिर्माद्रवतीसुतावपि ।
अगाधबुद्धिर्विदुरश्च माधवं
स्वयं च भीमो गजराजविक्रमः ॥ ५६
निवर्तयित्वा कुरुराष्ट्रवर्धनां-
स्ततः स सर्वान्विदुरं च वीर्यवान् ।
जनार्दनो दारुकमाह सत्वरः
प्रचोदयाश्वानिति सात्यकिं तथा ५७
ततो ययौ शत्रुगणप्रमर्दनः
शिनिप्रवीरानुगतो जनार्दनः ।
यथा निहत्यारिगणं शतक्रतु-
र्दिवं तथाऽऽनर्तपुरीं प्रतापवान् ॥ ५८

इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतापर्वणि कृष्णप्रयाणे
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

## ५३

वैशम्पायन उवाच ।
तथा प्रयान्तं वार्ष्णेयं द्वारकां भरतर्षभाः ।
परिष्वज्य न्यवर्तन्त सानुयात्राः परंतपाः ॥ १
पुनः पुनश्च वार्ष्णेयं पर्यष्वजत फाल्गुनः ।
आ चक्षुर्विषयाच्चैनं स ददर्श पुनः पुनः ॥ २
कृच्छ्रेणैव तु तां पार्थो गोविन्दे विनिवेशितां
संजहार ततो दृष्टिं कृष्णश्चाप्यपराजितः ॥ ३
तस्य प्रयाणे यान्यासन्निमित्तानि महात्मनः
बहून्यद्भुतरूपाणि तानि मे गदतः शृणु ॥ ४
वायुर्वेगेन महता रथस्य पुरतो ववौ ।
कुर्वन्निःशर्करं मार्गं विरजस्कमकण्टकम् ॥ ५
ववर्ष वासवश्चैव तोयं शुचि सुगन्धि च ।
दिव्यानि चैव पुष्पाणि पुरतः शार्ङ्गधन्वनः
स प्रयातो महाबाहुः समेषु मरुधन्वसु ।
ददर्शाथ मुनिश्रेष्ठमुत्तङ्कममितौजसम् ॥ ७
स तं संपूज्य तेजस्वी मुनिं पृथुललोचनः ।
पूजितस्तेन च तदा पर्यपृच्छदनामयम् ॥ ८

इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

५३

तथा प्रयान्तं वार्ष्णेयमित्यादिग्रन्थः पूर्वोक्तासूपनिषत्सु विद्याफलं विश्वरूपदर्शनं विद्यासाधनं गुरोराराधनं चेति द्वयमिहोक्तं विवरीतुं उत्तङ्कोपाख्यानव्याजेन प्रवर्तते तत उपरिष्टादश्वमेधव्याजेन कर्मणामप्याराधुपकारकत्वं विद्यायामुच्यत इति संगतिः ॥ १ ॥

स पृष्टः कुशलं तेन संपूज्य मधुसूदनम् ।
उत्तङ्को ब्राह्मणश्रेष्ठस्ततः पप्रच्छ माधवम् ॥ ९
कच्चिच्छौरे त्वया गत्वा कुरुपाण्डवसद्म तत्
कृतं सौभ्रात्रमचलं तन्मे व्याख्यातुमर्हसि १०
अपि सन्धाय तान्वीरानुपावृत्तोऽसि केशव
सम्बन्धिनः स्वदयितान्सततं वृष्णिपुङ्गव ११
कच्चित्पाण्डुसुताः पञ्च धृतराष्ट्रस्य चात्मजाः
लोकेषु विहरिष्यन्ति त्वया सह परंतप १२
स्वराष्ट्रे ते च राजानः
कच्चित्प्राप्स्यन्ति वै सुखम् ।
कौरवेषु प्रशान्तेषु
त्वया नाथेन केशव ॥ १३
या मे सम्भावना तात त्वयि नित्यमवर्तत ।
अपि सा सफला तात कृता ते भरतान्प्रति

श्रीभगवानुवाच ।

कृतो यत्नो मया पूर्वं सौशाम्ये कौरवान्प्रति
नाशक्यन्त यदा साम्ये ते स्थापयितुमञ्जसा ॥
ततस्ते निधनं प्राप्ताः सर्वे ससुतबान्धवाः ।
न दिष्टमप्यतिक्रान्तुं शक्यं बुद्ध्या बलेन वा ॥
महर्षे विदितं भूयः सर्वमेतत्तवानघ ।
तेऽत्यक्रामन्मतिं मह्यं भीष्मस्य विदुरस्य च
ततो यमक्षयं जग्मुः समासाद्येतरेतरम् ।
पञ्चैव पाण्डवाः शिष्टा हतामित्रा हतात्मजाः
धार्तराष्ट्राश्च निहताः सर्वे ससुतबान्धवाः ।
इत्युक्तवचने कृष्णे भृशं क्रोधसमन्वितः ।
उत्तङ्क इत्युवाचैनं रोषादुत्फुल्ललोचनः ॥ १९

उत्तङ्क उवाच ।

यस्माच्छक्तेन ते कृष्ण न त्राताः कुरुपुङ्गवाः
सम्बन्धिनः प्रियास्तस्माच्छप्स्येऽहं त्वामसंशयं
न च ते प्रसभं यस्मात्ते निगृह्य निवारिताः ।
तस्मान्मन्युपरीतस्त्वां शप्स्यामि मधुसूदन ॥
त्वया शक्तेन हि सता मिथ्याचारेण माधव
ते परीताः कुरुश्रेष्ठा नश्यन्तः स्म ह्युपेक्षिताः॥

वासुदेव उवाच ।

शृणु मे विस्तरेणेदं यद्वक्ष्ये भृगुनन्दन ।
गृहाणानुनयं चापि तपस्वी ह्यसि भार्गव ॥२३
श्रुत्वा च मे तदध्यात्मं मुञ्चेथाः शापमद्य वै ।
न च मां तपसाऽल्पेन शक्तोऽभिभवितुं पुमान्
न च ते तपसो नाशमिच्छामि तपतां वर ।
तपस्ते सुमहद्दीप्तं गुरवश्चापि तोषिताः ॥ २५
कौमारं ब्रह्मचर्यं ते जानामि द्विजसत्तम ।
दुःखार्जितस्य तपसस्तस्मान्नेच्छामि ते व्ययम्

इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतापर्वणि उत्तङ्कोपाख्याने कृष्णोत्तङ्कसमागमे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

## ५४

उत्तङ्क उवाच ।

ब्रूहि केशव तत्त्वेन त्वमध्यात्ममनिन्दितम् ।
श्रुत्वा श्रेयोऽभिधास्यामि शापं वा ते जनार्दन

वासुदेव उवाच ।

तमो रजश्च सत्त्वं च विद्धि भावान्मदाश्रयान्
तथा रुद्रान्वसूंश्चापि विद्धि मत्प्रभवान् द्विज
मयि सर्वाणि भूतानि सर्वभूतेषु चाप्यहम् ।
स्थित इत्यभिजानीहि मा तेऽभूदत्र संशयः॥३
तथा दैत्यगणान्सर्वान्यक्षगन्धर्वराक्षसान् ।
नागानप्सरसश्चैव विद्धि मत्प्रभवान्द्विज ॥ ४
सदसच्चैव यत्प्राहुरव्यक्तं व्यक्तमेव च ।
अक्षरं च क्षरं चैव सर्वमेतन्मदात्मकम् ॥ ५
ये चाश्रमेषु वै धर्माश्चतुर्धा विदिता मुने ।
वैदिकानि च सर्वाणि विद्धि सर्वं मदात्मकम्
असच्च सदसच्चैव यद्विश्वं सदसत्परम् ।
मत्तः परतरं नास्ति देवदेवात्सनातनात् ॥ ७

---

सौशाम्ये सौरस्ये ॥ १५ ॥ मिथ्याचारेण कपटपूर्वकम-विरोधच्छलेन विरोधं द्रढयता परीताः परितः प्राप्ताः ॥ २२ ॥ अनुनयं शिक्षाम् ॥ २३ ॥ मे मत्तः ॥ २४ ॥ इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

५४

ब्रूहीति ॥१॥ असत् शशशृंगादि सदसत् घटादि सदसत्परं अव्यक्तं एतत्त्रयमपि तत्त्वतः मत्तः परं नास्तीत्यर्थः ॥७

ओङ्कारप्रमुखान्वेदान्विद्धि मां त्वं भृगूद्वह ।
यूपं सोमं चरुं होमं त्रिदशाप्यायनं मखे ॥ ८
होतारमपि हव्यं च विद्धि मां भृगुनन्दन ।
अध्वर्युः कल्पकश्चापि हविः परमसंस्कृतम् ९
उद्गाता चापि मां स्तौति गीतघोषैर्महाध्वरे ।
प्रायश्चित्तेषु मां ब्रह्मन् शान्तिमङ्गलवाचकाः
स्तुवन्ति विश्वकर्माणं सततं द्विजसत्तम ।
मम विद्धि सुतं धर्ममग्रजं द्विजसत्तम ॥ ११
मानसं दयितं विप्र सर्वभूतदयात्मकम् ।
तत्राहं वर्तमानैश्च निवृत्तैश्चैव मानवैः ॥ १२
बह्वीः संसरमाणो वै योनीर्वर्तामि सत्तम ।
धर्मसंरक्षणार्थाय धर्मसंस्थापनाय च ॥ १३
तैस्तैर्वेषैश्च रूपैश्च त्रिषु लोकेषु भार्गव ।
अहं विष्णुरहं ब्रह्मा शक्रोऽथ प्रभवाप्ययः १४
भूतग्रामस्य सर्वस्य स्रष्टा संहार एव च ।
अधर्मे वर्तमानानां सर्वेषामहमच्युतः ॥ १५
धर्मस्य सेतुं बध्नामि
चलिते चलिते युगे ।
तास्ता योनीः प्रविश्याहं
प्रजानां हितकाम्यया ॥ १६
यदा त्वहं देवयोनौ वर्तामि भृगुनन्दन ।
तदाऽहं देववत्सर्वमाचरामि न संशयः ॥ १७
यदा गन्धर्वयोनौ वा वर्तामि भृगुनन्दन ।
तदा गन्धर्ववत्सर्वमाचरामि न संशयः ॥ १८
नागयोनौ यदा चैव तदा वर्तामि नागवत् ।
यक्षराक्षसयोन्योस्तु यथावद्विचराम्यहम् १९
मानुष्ये वर्तमाने तु कृपणं याचिता मया ।
न च ते जातसंमोहा वचोऽगृह्णन्त मोहिताः॥
भयं च महदुद्दिश्य त्रासिताः कुरवो मया ।
क्रुद्धेन भूत्वा तु पुनर्यथावदनुदर्शिताः ॥ २१
तेऽधर्मेणेह संयुक्ताः परीताः कालधर्मणा ।
धर्मेण निहता युद्धे गताः स्वर्गं न संशयः २२
लोकेषु पाण्डवाश्चैव
गताः ख्यातिं द्विजोत्तम ।
एतत्ते सर्वमाख्यातं
यन्मां त्वं परिपृच्छसि ॥ २३

इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतापर्वणि उत्तङ्कोपाख्याने कृष्णवाक्ये चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## ५५

उत्तङ्क उवाच ।
अभिजानामि जगतः कर्तारं त्वां जनार्दन ।
नूनं भवत्प्रसादोऽयमिति मे नास्ति संशयः१
चित्तं च सुप्रसन्नं मे त्वद्भावगतमच्युत ।
विनिवृत्तं च मे शापादिति विद्धि परंतप ॥ २
यदि त्वनुग्रहं कंचित्त्वत्तोऽर्हामि जनार्दन ।
द्रष्टुमिच्छामि ते रूपमैश्वरं तन्निदर्शय ॥ ३
वैशम्पायन उवाच ।
ततः स तस्मै प्रीतात्मा दर्शयामास तद्वपुः ।
शाश्वतं वैष्णवं धीमान्ददृशे यद्धनंजयः ॥ ४
स ददर्श महात्मानं विश्वरूपं महाभुजम् ।
सहस्रसूर्यप्रतिमं दीप्तिमत्पावकोपमम् ॥ ५
सर्वमाकाशमावृत्य तिष्ठन्तं सर्वतोमुखम् ।
तद्दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतम् ।
विस्मयं च ययौ विप्रस्तं दृष्ट्वा परमेश्वरम् ॥ ६
उत्तङ्क उवाच ।
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव
पद्भ्यां ते पृथिवी व्याप्ता शिरसा चावृतं नभः
द्यावापृथिव्योर्यन्मध्यं जठरेण तवावृतम् ।
भुजाभ्यामावृताश्चाशास्त्वमिदं सर्वमच्युत ८

---

अधर्मेणेति च्छेदः ॥ २२ ॥ इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

५५

यद्भगवता स्वस्य विश्वरूपत्वमुक्तं तदेव द्रष्टुमिच्छन्नुत्तङ्क उवाच—अभिजानामीत्यादिना ॥ १ ॥

संहरस्व पुनर्देवरूपमक्षय्यमुत्तमम् ।
पुनस्त्वां स्वेन रूपेण द्रष्टुमिच्छामि शाश्वतम्॥

वैशम्पायन उवाच ।

तमुवाच प्रसन्नात्मा गोविन्दो जनमेजय ।
वरं वृणीष्वेति तदा तमुत्तङ्कोऽब्रवीदिदम् १०
पर्याप्त एष एवाद्य वरस्त्वत्तो महाद्युते ।
यत्ते रूपमिदं कृष्ण पश्यामि पुरुषोत्तम ॥ ११
तमब्रवीत्पुनः कृष्णो मा त्वमत्र विचारय ।
अवश्यमेतत्कर्तव्यममोघं दर्शनं मम ॥ १२

उत्तङ्क उवाच ।

अवश्यं करणीयं च यद्येतन्मन्यसे विभो ।
तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभम् १३
ततः संहृत्य तत्तेजः प्रोवाचोत्तङ्कमीश्वरः ।
एष्टव्ये सति चिन्त्योऽहमित्युक्त्वा द्वारकां ययौ
ततः कदाचिद्भगवानुत्तङ्कस्तोयकाङ्क्षया ।
तृषितः परिचक्राम मरौ सस्मार चाच्युतम् ॥
ततो दिग्वाससं धीमान्मातङ्गं मलपङ्किनम् ।
अपश्यत मरौ तस्मिन् श्वयूथपरिवारितम् १६
भीषणं बद्धनिस्त्रिंशं बाणकार्मुकधारिणम् ।
तस्याधः स्रोतसोऽपश्यद्वारि भूरि द्विजोत्तमः
स्मरन्नेव च तं प्राह मातङ्गः प्रहसन्निव ।
एह्युत्तङ्क प्रतीच्छस्व मत्तो वारि भृगूद्वह १८
कृपा हि मे सुमहती त्वां दृष्ट्वा तृट्समाश्रितम्
इत्युक्तस्तेन स मुनिस्तत्तोयं नाभ्यनन्दत १९
चिक्षेप च स तं धीमान्वाग्भिरुग्राभिरच्युतम्।
पुनः पुनश्च मातङ्गः पिबस्वेति तमब्रवीत् २०
न चापिबत्स सक्रोधः क्षुभितेनान्तरात्मना
स तथा निश्चयात्तेन प्रत्याख्यातो महात्मना॥
श्वभिः सह महाराज तत्रैवान्तरधीयत ।
उत्तङ्कस्तं तथा दृष्ट्वा ततो व्रीडितमानसः ॥ २२
मेने प्रलब्धमात्मानं कृष्णेनामित्रघातिना ।
अथ तेनैव मार्गेण शङ्खचक्रगदाधरः ॥ २३
आजगाम महाबुद्धिरुत्तङ्कश्चैनमब्रवीत् ।
न युक्तं तादृशं दातुं त्वया पुरुषसत्तम ॥ २४
सलिलं विप्रमुख्येभ्यो मातङ्गस्रोतसा विभो
इत्युक्तवचनं तं तु महाबुद्धिर्जनार्दनः ॥ २५
उत्तङ्कं श्लक्ष्णया वाचा सान्त्वयन्निदमब्रवीत्
यादृशेनेह रूपेण योग्यं दातुं धृतेन वै ॥ २६
तादृशं खलु ते दत्तं यच्च त्वं नावबुध्यथाः ।
मया त्वदर्थमुक्तो वै वज्रपाणिः पुरन्दरः॥२७
उत्तङ्कायामृतं देहि तोयरूपमिति प्रभुः ।
स मामुवाच देवेन्द्रो न मर्त्योऽमर्त्यतां व्रजेत्
अन्यमस्मै वरं देहीत्यसकृद्भृगुनन्दन ।
अमृतं देयमित्येव मयोक्तः स शचीपतिः २९
स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत् ।
यदि देयमवश्यं वै मातङ्गोऽहं महामते ॥ ३०
भूत्वाऽमृतं प्रदास्यामि भार्गवाय महात्मने ।
यद्येवं प्रतिगृह्णाति भार्गवोऽमृतमद्य वै ॥ ३१
प्रदातुमेष गच्छामि भार्गवस्यामृतं विभो ।
प्रत्याख्यातस्त्वहं तेन दास्यामि न कथञ्चन
स तथा समयं कृत्वा
तेन रूपेण वासवः ।
उपस्थितस्त्वया चापि
प्रत्याख्यातोऽमृतं ददत् ॥ ३३
चाण्डालरूपी भगवा-
न्सुमहांस्ते व्यतिक्रमः ।
यत्तु शक्यं मया कर्तुं
भूय एव तवेप्सितम् ॥ ३४
तोयेप्सां तव दुर्धर्षां करिष्ये सफलामहम् ।
येष्वहःसु च ते ब्रह्मन्सलिलेप्सा भविष्यति ॥
तदा मरौ भविष्यन्ति जलपूर्णाः पयोधराः
रसवच्च प्रदास्यन्ति तोयं ते भृगुनन्दन ॥ ३६
उत्तङ्कमेघा इत्युक्ताः
ख्यातिं यास्यन्ति चापि ते ।
इत्युक्तः प्रीतिमान्विप्रः
कृष्णेन स बभूव ह ।
अद्याप्युत्तङ्कमेघाश्च
मरौ वर्षन्ति भारत ॥ ३७

इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतापर्वणि उत्तङ्कोपाख्याने पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

एष्टव्ये जलेऽपेक्षिते सति॥१४॥मातंगं चांडालविशेषम् १६॥ अधः पाददेशे स्रोतसो दृतेर्वारीति सम्बन्धः तस्य समीपे अधः स्रोतसो भोगवत्या इति वा ॥ १७ ॥ चिक्षेप निन्दितवान् अच्युतं वरप्रदं कृष्णम् ॥ २० ॥ प्रलब्धं वञ्चितम् ॥ २२ ॥ इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

५६

जनमेजय उवाच ।

उत्तङ्कः केन तपसा संयुक्तो वै महामनाः ।
यः शापं दातुकामोऽभूद्विष्णवे प्रभविष्णवे १

वैशम्पायन उवाच ।

उत्तङ्को महता युक्तस्तपसा जनमेजय ।
गुरुभक्तः स तेजस्वी नान्यत्किंचिदपूजयत् २
सर्वेषामृषिपुत्राणामेष आसीन्मनोरथः ।
औत्तङ्कीं गुरुवृत्तिं वै प्राप्नुयामेति भारत ।
गौतमस्य तु शिष्याणां बहूनां जनमेजय ॥ ३
उत्तङ्केऽभ्यधिका प्रीतिः स्नेहश्चैवाभवत्तदा ।
स तस्य दमशौचाभ्यां विक्रान्तेन च कर्मणा
सम्यक्चैवोपचारेण गौतमः प्रीतिमानभूत् ।
अथ शिष्यसहस्राणि समनुज्ञातवानृषिः ॥ ५
उत्तङ्कं परया प्रीत्या नाभ्यनुज्ञातुमैच्छत ।
तं क्रमेण जरा तात प्रतिपेदे महामुनिम् ॥ ६
न चान्वबुध्यत तदा स मुनिर्गुरुवत्सलः ।
ततः कदाचिद्राजेन्द्र काष्ठान्यानयितुं ययौ ७
उत्तङ्कः काष्ठभारं च महान्तं समुपानयत् ।
स तद्भाराभिभूतात्मा काष्ठभारमरिन्दम ॥ ८
निचिक्षेप क्षितौ राजन्परिश्रान्तो बुभुक्षितः ।
तस्य काष्ठे विलग्नाऽभूज्जटा रूप्यसमप्रभा ॥ ९
ततः काष्ठैः सह तदा पपात धरणीतले ।
ततः स भारनिष्पिष्टः क्षुधाविष्टश्च भारत ॥
दृष्ट्वा तां वयसोवस्थां रुरोदार्तस्वरस्तदा ।
ततो गुरुसुता तस्य पद्मपत्रनिभानना ॥ ११
जग्राहाश्रूणि सुश्रोणी करेण पृथुलोचना ।
पितुर्नियोगाद्धर्मज्ञा शिरसाऽवनता तदा १२
तस्या निपेततुर्दग्धौ करौ तैरश्रुबिन्दुभिः ।
न हि तानश्रुपातांस्तु शक्ता धारयितुं मही१३
गौतमस्त्वब्रवीद्विप्रमुत्तङ्कं प्रीतमानसः ।
कस्मात्तात तवाद्येह शोकोत्तरमिदं मनः ॥१४
स स्वैरं ब्रूहि विप्रर्षे श्रोतुमिच्छामि तत्त्वतः ।

उत्तङ्क उवाच ।

भवद्गतेन मनसा भवत्प्रियचिकीर्षया ।
भवद्भक्तिगतेनेह भवद्भावानुगेन च ॥ १५
जरेयं नावबुद्धा मे नाभिज्ञातं सुखं च मे ।
शतवर्षोषितं मां हि न त्वमभ्यनुजानिथाः १६
भवता त्वभ्यनुज्ञाताः शिष्याः प्रत्यवरा मम ।
उपपन्ना द्विजश्रेष्ठ शतशोऽथ सहस्रशः ॥ १७

गौतम उवाच ।

त्वत्प्रीतियुक्तेन मया गुरुशुश्रूषया तव ।
व्यतिक्रामन्महाकालो नावबुद्धो द्विजर्षभ १८
किं त्वद्य यदि ते श्रद्धा गमनं प्रति भार्गव ।
अनुज्ञां प्रतिगृह्य त्वं स्वगृहान्गच्छ मा चिरम्

उत्तङ्क उवाच ।

गुर्वर्थं कं प्रयच्छामि ब्रूहि त्वं द्विजसत्तम ।
तमुपाहृत्य गच्छेयमनुज्ञातस्त्वया विभो ॥२०

गौतम उवाच ।

दक्षिणा परितोषो वै गुरूणां सद्भिरुच्यते ।
तव ह्याचरतो ब्रह्मंस्तुष्टोऽहं वै न संशयः॥२१
इत्थं च परितुष्टं मां विजानीहि भृगूद्वह ।
युवा षोडशवर्षो हि यदद्य भविता भवान् २२
ददानि पत्नीं कन्यां च स्वां ते दुहितरं द्विज
एतामृतेऽङ्गना नान्या त्वत्तेजोऽर्हति सेवितुम्
ततस्तां प्रतिजग्राह युवा भूत्वा यशस्विनीम्
गुरुणा चाभ्यनुज्ञातो गुरुपत्नीमथाब्रवीत् ॥ २४
कं भवत्यै प्रयच्छामि गुर्वर्थं विनियुङ्क्ष्व माम् ।
प्रियं हितं च कांक्षामि प्राणैरपि धनैरपि २५
यद्दुर्लभं हि लोकेऽस्मिन् रत्नमत्यद्भुतं महत् ।
तदानयेयं तपसा न हि मेऽत्रास्ति संशयः

अहल्योवाच ।

परितुष्टास्मि ते विप्र नित्यं भक्त्या तवानघ
पर्याप्तमेतद्भद्रं ते गच्छ तात यथेप्सितम्॥ २७

वैशम्पायन उवाच ।

उत्तङ्कस्तु महाराज पुनरेवाब्रवीद्वचः ।
आज्ञापयस्व मां मातः कर्तव्यं च तव प्रियम्

अहल्योवाच ।

सौदासपत्न्या विधृते दिव्ये ये मणिकुण्डले-
ते समानय भद्रं ते गुर्वर्थः सुकृतो भवेत् ॥ २९

---

५६

उत्तङ्क इति ॥ १ ॥ निचिक्षेपेत्यत्र निष्पिपेषेति पाठोऽपि स एवार्थः ॥ ९ ॥ निष्पिष्टः चूर्णीभूत इव ॥१०॥

अभ्यनुजानीथाः अभ्यनुजानिथाः अभ्यनुज्ञातवानसि अड भावो ह्रस्वत्वं चार्षम् ॥ १६ ॥

स तथेति प्रतिश्रुत्य जगाम जनमेजय ।
गुरुपत्नीप्रियार्थं वै ते समानयितुं तदा ॥ ३०
स जगाम ततः शीघ्रमुत्तङ्को ब्राह्मणर्षभः ।
सौदासं पुरुषादं वै भिक्षितुं मणिकुण्डले ३१
गौतमस्त्वब्रवीत्पत्नीमुत्तङ्को नाद्य दृश्यते ।
इति पृष्टा तमाचष्ट कुण्डलार्थं गतं च सा ॥३२
ततः प्रोवाच पत्नीं स न ते सम्यगिदं कृतम् ।
शप्तः स पार्थिवो नूनं ब्राह्मणं तं वधिष्यति ॥

अहल्योवाच ।

अजानन्त्या नियुक्तः स भगवन्ब्राह्मणो मया ।
भवत्प्रसादान्न भयं किञ्चित्तस्य भविष्यति ॥
इत्युक्तः प्राह तां पत्नीमेवमस्त्विति गौतमः ।
उत्तङ्कोऽपि वने शून्ये राजानं तं ददर्श ह ३५

इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतापर्वणि उत्तङ्कोपाख्याने कुण्डलाहरणे षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

५७

वैशम्पायन उवाच ।

स तं दृष्ट्वा तथाभूतं राजानं घोरदर्शनम् ।
दीर्घश्मश्रुधरं नृणां शोणितेन समुक्षितम् १
चकार न व्यथां विप्रो राजा त्वेनमथाब्रवीत् ।
प्रत्युत्थाय महातेजा भयकर्ता यमोपमः ॥ २
दिष्ट्या त्वमसि कल्याण
षष्ठे काले ममान्तिकम् ।
भक्ष्यं मृगयमाणस्य
संप्राप्तो द्विजसत्तम ॥ ३

उत्तङ्क उवाच ।

राजन्गुर्वर्थिनं विद्धि चरन्तं मामिहागतम् ।
न च गुर्वर्थमुद्युक्तं हिंस्यमाहुर्मनीषिणः ॥ ४

राजोवाच ।

षष्ठे काले ममाहारो विहितो द्विजसत्तम ।
न शक्यस्त्वं समुत्स्रष्टुं क्षुधितेन मयाद्य वै ५

उत्तङ्क उवाच ।

एवमस्तु महाराज समयः क्रियतां तु मे ।
गुर्वर्थमभिनिर्वर्त्य पुनरेष्यामि ते वशम् ॥ ६
संश्रुतश्च मया योऽर्थो गुरवे राजसत्तम ।
त्वदधीनः स राजेन्द्र तं त्वां भिक्षे नरेश्वर ७
ददासि विप्रमुख्येभ्यस्त्वं हि रत्नानि नित्यदा
दाता च त्वं नरव्याघ्र पात्रभूतः क्षिताविह ।
पात्रं प्रतिगृहे चापि विद्धि मां नृपसत्तम ॥ ८
उपाहृत्य गुरोरर्थं त्वदायत्तमरिन्दम ।
समयेनेह राजेन्द्र पुनरेष्यामि ते वशम् ॥ ९
सत्यं ते प्रतिजानामि नात्र मिथ्या कथञ्चन ।
अनृतं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा॥१०

सौदास उवाच ।

यदि मत्तस्त्वदायत्तो गुर्वर्थः कृत एव सः ।
यदि चास्मि प्रतिग्राह्यः सांप्रतं तद्वदस्व मे ११

उत्तङ्क उवाच ।

प्रतिग्राह्यो मतो मे त्वं सदैव पुरुषर्षभ ।
सोऽहं त्वामनुसंप्राप्तो भिक्षितुं मणिकुण्डले १२

सौदास उवाच ।

पत्न्यास्ते मम विप्रर्षे उचिते मणिकुण्डले
वरयार्थं त्वमन्यं वै तं ते दास्यामि सुव्रत ॥ १३

उत्तङ्क उवाच ।

अलं ते व्यपदेशेन प्रमाणा यदि ते वयम् ।
प्रयच्छ कुण्डले मह्यं सत्यवाग्भव पार्थिव १४

वैशम्पायन उवाच ।

इत्युक्तस्त्वब्रवीद्राजा तमुत्तङ्कं पुनर्वचः ।
गच्छ मद्वचनाद्देवीं ब्रूहि देहीति सत्तम ॥ १५
सैवमुक्ता त्वया नूनं मद्वाक्येन शुचिव्रता ।
प्रदास्यति द्विजश्रेष्ठ कुण्डले ते न संशयः॥१६

उत्तङ्क उवाच ।

क्व पत्नी भवतः शक्या मया द्रष्टुं नरेश्वर ।
स्वयं वाऽपि भवान्पत्नीं किमर्थं नोपसर्पति ॥

इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

५७

स तमिति ॥ १ ॥

सौदास उवाच।
तां द्रक्ष्यति भवानद्य कस्मिंश्चिद्वननिर्झरे।
षष्ठे काले न हि मया सा शक्या द्रष्टुमद्य वै ॥
वैशम्पायन उवाच।
उत्तङ्कस्तु तथोक्तः स जगाम भरतर्षभ।
मदयन्तीं च दृष्ट्वा स ज्ञापयत्स्वप्रयोजनम् १९
सौदासवचनं श्रुत्वा ततः सा पृथुलोचना।
प्रत्युवाच महाबुद्धिमुत्तङ्कं जनमेजय ॥ २०
एवमेतद्द्विज ब्रह्मन्नानृतं वदसेऽनघ।
अभिज्ञानं तु किंचित्त्वं समानयितुमर्हसि २१
इमे हि दिव्ये मणिकुण्डले मे
देवाश्च यक्षाश्च महर्षयश्च।
तैस्तैरुपायैरपहर्तुकामा-
श्छिद्रेषु नित्यं परितर्कयन्ति ॥ २२
निक्षिप्तमेतद्भुवि पन्नगास्तु
रत्नं समासाद्य परामृशेयुः।
यक्षास्तथोच्छिष्टधृतं सुराश्च
निद्रावशाद्वा परिधर्षयेयुः ॥ २३
छिद्रेष्वेतेष्विमे नित्यं ह्रियेते द्विजसत्तम।
देवराक्षसनागानामप्रमत्तेन धार्यते ॥ २४
स्यन्देते हि दिवा रुक्मं रात्रौ च द्विजसत्तम
नक्तं नक्षत्रताराणां प्रभामाक्षिप्य वर्ततः २५
एते ह्यामुच्य भगवन् क्षुत्पिपासाभयं कुतः।
विषाग्निश्वापदेभ्यश्च भयं जातु न विद्यते २६
ह्रस्वे न चैते आमुक्ते भवतो ह्रस्वके तदा।
अनुरूपेण चामुक्ते जायेते तत्प्रमाणके ॥ २७
एवंविधे ममैते वै कुण्डले परमार्चिते।
त्रिषु लोकेषु विज्ञाते तदभिज्ञानमानय ॥ २८

इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतापर्वणि उत्तङ्कोपाख्याने सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

## ५८

वैशम्पायन उवाच।
स मित्रसहमासाद्य अभिज्ञानमयाचत।
तस्मै ददावभिज्ञानं स चेक्ष्वाकुवरस्तदा १
सौदास उवाच।
न चैवैषा गतिः क्षेम्या न चान्या विद्यते गतिः
एतन्मे मतमाज्ञाय प्रयच्छ मणिकुण्डले ॥ २
इत्युक्तस्तामुत्तङ्कस्तु भर्तुर्वाक्यमथाब्रवीत्।
श्रुत्वा च सा तदा प्रादात्ततस्ते मणिकुण्डले
अवाप्य कुण्डले ते तु राजानं पुनरब्रवीत्।
किमेतद्गुह्य वचनं श्रोतुमिच्छामि पार्थिव ४
सौदास उवाच।
प्रजा निसर्गाद्विप्रान्वै क्षत्रियाः पूजयन्ति ह
विप्रेभ्यश्चापि बहवो दोषाः प्रादुर्भवन्ति वै ५
सोऽहं द्विजेभ्यः प्रणतो विप्राद्दोषमवाप्तवान्।
गतिमन्यां न पश्यामि मदयन्तीसहायवान् ६
न चान्यामपि पश्यामि गतिं गतिमतां वर।
स्वर्गद्वारस्य गमने स्थाने चेह द्विजोत्तम ॥ ७
न हि राज्ञा विशेषेण विरुद्धेन द्विजातिभिः।
शक्यं हि लोके स्थातुं वै प्रेत्य वा सुखमेधितुम्
तदिष्टे ते मया दत्ते एते स्वे मणिकुण्डले।
यः कृतस्तेऽद्य समयः सफलं तं कुरुष्व मे ९
उत्तङ्क उवाच।
राजंस्तथेह कर्तास्मि पुनरेष्यामि ते वशम्।
प्रश्नं च कंचित्प्रष्टुं त्वां निवृत्तोऽस्मि परन्तप ॥

---

छिद्रेष्वेतेष्विमे इति पूर्वान्वयि नागानां नागैः ह्रियेत इति सम्बन्धः ॥ २४ ॥ इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

५८

**स मित्रेति**। मित्रसहः सौदासः अभिज्ञानं श्लोकरूपं ज्ञापकम् ॥ १ ॥ तदेवाह—**न चेति**। एषा रक्षोयोनिरूपा अन्या इतो मुक्तिरूपा अतो मम इतोगतेर्मुक्त्यर्थे प्रयच्छ देहि मणिमये कुण्डले ॥ २ ॥

सौदास उवाच ।
ब्रूहि विप्र यथाकामं प्रतिवक्तास्मि ते वचः।
छेत्ताऽस्मि संशयं तेऽद्य न मेत्रास्ति विचारणा
उत्तङ्क उवाच ।
प्राहुर्वाक्संयतं विप्रं धर्मनैपुणदर्शिनः ।
मित्रेषु यश्च विषमः स्तेन इत्येव तं विदुः १२
स भवान्मित्रतामद्य संप्राप्तो मम पार्थिव ।
स मे बुद्धिं प्रयच्छस्व संमतां पुरुषर्षभ ॥ १३
अवाप्तार्थोऽहमद्येह भवांश्च पुरुषादकः ।
भवत्सकाशमागन्तुं क्षमं मम न वेति वै १४
सौदास उवाच ।
क्षमं चेदिह वक्तव्यं तव द्विजवरोत्तम ।
मत्समीपं द्विजश्रेष्ठ नागन्तव्यं कथञ्चन ॥ १५
एवं तव प्रपश्यामि श्रेयो भृगुकुलोद्वह ।
आगच्छतो हि ते विप्र भवेन्मृत्युर्न संशयः१६
वैशम्पायन उवाच ।
इत्युक्तः स तदा राज्ञा क्षमं बुद्धिमता हितम्
अनुज्ञाप्य स राजानमहल्यां प्रतिजग्मिवान्
गृहीत्वा कुण्डले दिव्ये गुरुपत्न्याः प्रियङ्करः
जवेन महता प्रायाद्गौतमस्याश्रमं प्रति ॥ १८
यथा तयो रक्षणं च मदयन्त्याभिभाषितम् ।
तथा ते कुण्डले बद्ध्वा तदा कृष्णाजिनेऽनयत्
स कस्मिंश्चित्क्षुधाविष्टः फलभारसमन्वितम् ।
बिल्वं ददर्श विप्रर्षि- रारुरोह च तं ततः ॥ २० ॥
शाखामासज्य तस्यैव कृष्णाजिनमरिन्दम
पातयामास बिल्वानि तदा स द्विजपुङ्गवः २१
अथ पातयमानस्य बिल्वापहृतचक्षुषः ।
न्यपतंस्तानि बिल्वानि तस्मिन्नेवाजिने विभो
यस्मिंस्ते कुण्डले बद्धे तदा द्विजवरेण वै ।
बिल्वप्रहारैस्तस्याथ व्यशीर्यद्बन्धनं ततः २३
सकुण्डलं तदजिनं पपात सहसा तरोः ।
विशीर्णबन्धने तस्मिन्गते कृष्णाजिने महीम्
अपश्यद्भुजगः कश्चित्ते तत्र मणिकुण्डले ।
ऐरावतकुलोद्भूतः शीघ्रो भूत्वा तदा हि सः ॥
विदश्यास्येन वल्मीकं विवेशाथ स कुण्डले
ह्रियमाणे तु दृष्ट्वा स कुण्डले भुजगेन ह २६
पपात वृक्षात्सोद्वेगो दुःखात्परमकोपनः ।
स दण्डकाष्ठमादाय वल्मीकमखनत्तदा २७
अहानि त्रिंशदव्यग्रः पञ्च चान्यानि भारत ।
क्रोधामर्षाभिसंतप्तस्तदा ब्राह्मणसत्तमः २८
तस्य वेगमसह्यं तमसहन्ती वसुन्धरा ।
दण्डकाष्ठाभिनुन्नाङ्गी चचाल भृशमाकुला ॥
ततः खनत एवाथ विप्रर्षेर्धरणीतलम् ।
नागलोकस्य पन्थानं कर्तुकामस्य निश्चयात् ॥
रथेन हरियुक्तेन तं देशमुपजग्मिवान् ।
वज्रपाणिर्महातेजास्तं ददर्श द्विजोत्तमम् ३०
वैशम्पायन उवाच ।
स तु तं ब्राह्मणो भूत्वा तस्य दुःखेन दुःखितः
उत्तङ्कमब्रवीद्वाक्यं नैतच्छक्यं त्वयेति वै ३१
इतो हि नागलोको वै योजनानि सहस्रशः ।
न दण्डकाष्ठसाध्यं च मन्ये कार्यमिदं तव ॥
उत्तङ्क उवाच ।
नागलोके यदि ब्रह्मन्न शक्ये कुण्डले मया।
प्राप्तुं प्राणान्विमोक्ष्यामि पश्यतस्ते द्विजोत्तम
वैशम्पायन उवाच ।
यदा स नाशकत्तस्य निश्चयं कर्तुमन्यथा ।
वज्रपाणिस्तदा दण्डं वज्रास्त्रेण युयोज ह ३४
ततो वज्रप्रहारैस्तैर्दार्यमाणा वसुन्धरा ।
नागलोकस्य पन्थानमकरोज्जनमेजय ॥ ३५
स तेन मार्गेण तदा नागलोकं विवेश ह ।
ददर्श नागलोकं च योजनानि सहस्रशः ३६
प्राकारनिचयैर्दिव्यैर्मणिमुक्तास्वलंकृतैः ।
उपपन्नं महाभाग शातकुम्भमयैस्तथा ॥ ३७
वापीः स्फटिकसोपाना नदीश्च विमलोदकाः
ददर्श वृक्षांश्च बहून्नानाद्विजगणायुतान् ॥ ३८
तस्य लोकस्य च द्वारं स ददर्श भृगूद्वहः ।
पञ्चयोजनविस्तारमायतं शतयोजनम् ॥ ३९
नागलोकमुत्तङ्कस्तु प्रेक्ष्य दीनोऽभवत्तदा ।
निराशश्चाभवत्तत्र कुण्डलाहरणे पुनः ॥ ४०
तत्र प्रोवाच तुरगस्तं कृष्णश्वेतवालधिः ।
ताम्रास्यनेत्रः कौरव्यः प्रज्वलन्निव तेजसा ॥
धमस्वापानमेतन्मे ततस्त्वं विप्र लप्स्यसे ।
ऐरावतसुतेनेह तवानीते हि कुण्डले ॥ ४२

शाखां शाखायाम् ॥ २१ ॥ आस्येन कुण्डले विदश्य धृत्वा वल्मीकं विवेशेति सम्बन्धः ॥ २६ ॥

मा जुगुप्सां कृथाः पुत्र त्वमत्रार्थे कथञ्चन ।
त्वयैतद्धि समाचीर्णं गौतमस्याश्रमे तदा ४३
उत्तङ्क उवाच ।
कथं भवन्तं जानीयामुपाध्यायाश्रमं प्रति ।
यन्मया चीर्णपूर्वं हि श्रोतुमिच्छामि तद्ध्यहम्
अश्व उवाच ।
गुरोर्गुरुं मां जानीहि ज्वलनं जातवेदसम् ।
त्वया ह्यहं सदा विप्र गुरोरर्थेऽभिपूजितः ४५
विधिवत्सततं विप्र शुचिना भृगुनन्दन ।
तस्माच्छ्रेयो विधास्यामि तवैवं कुरु मा चिरम्
इत्युक्तस्तु तथाऽकार्षीदुत्तङ्कश्चित्रभानुना ।
घृतार्चिः प्रीतिमांश्चापि प्रजज्वाल दिधक्षया
ततोऽस्य रोमकूपेभ्यो धम्यतस्तत्र भारत ।
घनः प्रादुरभूद्धूमो नागलोकभयावहः ॥ ४८
तेन धूमेन महता वर्धमानेन भारत ।
नागलोके महाराज न प्राज्ञायत किञ्चन ४९
हाहाकृतमभूत्सर्वमैरावतनिवेशनम् ।
वासुकिप्रमुखानां च नागानां जनमेजय ५०
न प्राकाशन्त वेश्मानि धूमरुद्धानि भारत ।
नीहारसंवृतानीव वनानि गिरयस्तथा ॥ ५१
ते धूमरक्तनयना वह्नितेजोऽभितापिताः ।
आजग्मुर्निश्चयं ज्ञातुं भार्गवस्य महात्मनः ५२
श्रुत्वा च निश्चयं तस्य महर्षेरतितेजसः ।
सम्भ्रान्तनयनाः सर्वे पूजां चक्रुर्यथाविधि ५३
सर्वे प्राञ्जलयो नागा वृद्धबालपुरोगमाः ।
शिरोभिः प्रणिपत्योचुः प्रसीद भगवन्निति ॥
प्रसाद्य ब्राह्मणं ते तु पाद्यमर्घ्यं निवेद्य च ।
प्रायच्छन्कुण्डले दिव्ये पन्नगाः परमार्चिते ५५
ततः स पूजितो नागैस्तदोत्तङ्कः प्रतापवान् ।
अग्निं प्रदक्षिणं कृत्वा जगाम गुरुसद्म तत ५६
स गत्वा त्वरितो राजन् गौतमस्य निवेशनम्
प्रायच्छत् कुण्डले दिव्ये गुरुपत्न्यास्तदाऽनघ
वासुकिप्रमुखानां च नागानां जनमेजय ।
सर्वं शशंस गुरवे यथावद्द्विजसत्तमः ॥ ५८
एवं महात्मना तेन त्रीँल्लोकान् जनमेजय ।
परिक्रम्याहृते दिव्ये ततस्ते मणिकुण्डले ५९
एवंप्रभावः स मुनिरुत्तङ्को भरतर्षभ ।
परेण तपसा युक्तो यन्मां त्वं परिपृच्छसि ६०

इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतापर्वणि उत्तङ्कोपाख्याने अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

## ५९

जनमेजय उवाच ।
उत्तङ्कस्य वरं दत्वा गोविन्दो द्विजसत्तम
अत ऊर्ध्वं महाबाहुः किं चकार महायशाः १
वैशम्पायन उवाच ।
उत्तङ्काय वरं दत्वा प्रायात्सात्यकिना सह ।
द्वारकामेव गोविन्दः शीघ्रवेगैर्महाहयैः ॥ २
सरांसि सरितश्चैव वनानि च गिरींस्तथा ।
अतिक्रम्याससादाथ रम्यां द्वारवतीं पुरीम् ३
वर्तमाने महाराज महे रैवतकस्य च ।
उपायात्पुण्डरीकाक्षो युयुधानानुगस्तदा ४
अलंकृतस्तु स गिरिर्नानारूपैर्विचित्रितैः ।
बभौ रत्नमयैः कोशैः संवृतः पुरुषर्षभ ॥ ५
काञ्चनस्रग्भिरग्र्याभिः सुमनोभिस्तथैव च ।
वासोभिश्च महाशैलः कल्पवृक्षैस्तथैव च ६
दीपवृक्षैश्च सौवर्णैरभीक्ष्णमुपशोभितः ।
गुहानिर्झरदेशेषु दिवाभूतो बभूव ह ॥ ७

धम्यतो धम्यमानस्य ॥ ४८ ॥ एवमिति गुरुभक्तेषु देवा अप्यनुग्रहं कुर्वन्तीति भावः ॥ ६० ॥ इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८॥

५९

उत्तङ्कस्येति ॥ १ ॥ महे उत्सवे ॥ ४ ॥ दिवाभूतः दिवसवत्प्रकाशबहुलः दिवाकरतुल्य इति यावत् ॥ ७ ॥

पताकाभिर्विचित्राभिः सघण्टाभिः समंततः
पुम्भिः स्त्रीभिश्च संघुष्टः प्रगीत इव चाभवत्
अतीव प्रेक्षणीयोऽभून्मेरुर्मुनिगणैरिव ।
मत्तानां हृष्टरूपाणां स्त्रीणां पुंसां च भारत ९
गायतां पर्वतेन्द्रस्य दिवस्पृगिव निःस्वनः ।
प्रमत्तमत्तसंमत्तक्ष्वेडितोत्कृष्टसंकुलः ॥ १०
तथा किलकिलाशब्दैर्भूधरोऽभून्मनोहरः ।
विपणापणवान् रम्यो भक्ष्यभोज्यविहारवान्
वस्त्रमाल्योत्करयुतो वीणावेणुमृदङ्गवान् ।
सुरामैरेयमिश्रेण भक्ष्यभोज्येन चैव ह ॥ १२
दीनान्धकृपणादिभ्यो दीयमानेन चानिशम्
बभौ परमकल्याणो महस्तस्य महागिरेः १३
पुण्यावसथवान्वीर पुण्यकृद्भिर्निषेवितः ।
विहारो वृष्णिवीराणां महे रैवतकस्य ह १४
स नगो वेश्मसंकीर्णो देवलोक इवाबभौ ।
तदा च कृष्णसान्निध्यमासाद्य भरतर्षभ १५
शक्रसद्मप्रतीकाशो बभूव स हि शैलराट् ।
ततः संपूज्यमानः स विवेश भवनं शुभम् ॥
गोविन्दः सात्यकिश्चैव जगाम भवनं स्वकम्
विवेश च प्रहृष्टात्मा चिरकालप्रवासतः १७
कृत्वा नसुकरं कर्म दानवेष्विव वासवः ।
उपायान्तं तु वार्ष्णेयं भोजवृष्ण्यन्धकास्तथा
अभ्यगच्छन्महात्मानं देवा इव शतक्रतुम् ।
स तानभ्यर्च्य मेधावी पृष्ट्वा च कुशलं तदा ।
अभ्यवादयत प्रीतः पितरं मातरं तदा १९
ताभ्यां स संपरिष्वक्तः सांत्वितश्च महाभुजः
उपोपविष्टैः सर्वैस्तैर्वृष्णिभिः परिवारितः २०
स विश्रान्तो महातेजाः कृतपादावनेजनः ।
कथयामास तत्सर्वं पृष्टः पित्रा महाहवम् २१

इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतापर्वणि कृष्णस्य द्वारकाप्रवेशे ऊनषष्टितमोऽध्यायः ॥ ५९ ॥

## ६०

वसुदेव उवाच ।
श्रुतवानस्मि वार्ष्णेय संग्रामं परमाद्भुतम् ।
नराणां वदतां तत्र कथं वा तेषु नित्यशः ॥ १
त्वं तु प्रत्यक्षदर्शी च रूपज्ञश्च महाभुजः ।
तस्मात्प्रब्रूहि संग्रामं याथातथ्येन मेऽनघ ॥ २
यथा तदभवद्युद्धं पाण्डवानां महात्मनाम् ।
भीष्म-कर्ण-कृप-द्रोण-शल्यादिभिरनुत्तमम्
अन्येषां क्षत्रियाणां च कृतास्त्राणामनेकशः ।
नानावेषाकृतिमतां नानादेशनिवासिनाम् ४
वैशम्पायन उवाच ।
इत्युक्तः पुण्डरीकाक्षः पित्रा मातुस्तदन्तिके
शशंस कुरुवीराणां संग्रामे निधनं यथा ॥ ५
वासुदेव उवाच ।
अत्यद्भुतानि कर्माणि क्षत्रियाणां महात्मनाम्
बहुलत्वान्न संख्यातुं शक्यान्यब्दशतैरपि ॥ ६
प्राधान्यतस्तु गदतः समासेनैव मे शृणु ।
कर्माणि पृथिवीशानां यथावदमरद्युते ॥ ७
भीष्मः सेनापतिरभूदेकादशचमूपतिः ।
कौरव्यः कौरवेन्द्राणां देवानामिव वासवः ८
शिखण्डी पाण्डुपुत्राणां नेता सप्तचमूपतिः ।
बभूव रक्षितो धीमान् श्रीमता सव्यसाचिना
तेषां तदभवद्युद्धं दशाहानि महात्मनाम् ।
कुरूणां पाण्डवानां च सुमहल्लोमहर्षणम् १०

प्रमत्ताः क्रीडाद्यासक्त्यानवहिताः मत्ताः मद्यादिना संमत्ता हृष्टाः क्ष्वेडितं कूर्दनं उत्कृष्टं अन्योन्यमाकर्षणं तैः संकुलः तच्छब्दैराकुलो निःस्वनः अभूदिति शेषः ॥ १० ॥
इति श्रीमहाभारते आश्वमेधिके पर्वणि नैलकण्ठीये भारतभावदीपे ऊनषष्टितमोऽध्यायः ॥ ५९ ॥

६०
श्रुतवानस्मि वार्ष्णेयेति ॥ १ ॥ पित्रा मातुरन्तिके इत्युक्तः पुंडरीकाक्षः संग्रामे तत्कुरुवीराणां निधनं यथा यथावच्छशंसेत्यन्वयः ॥ ५ ॥

समाप्य सर्वाः प्रयतः संहिताः शास्त्रकोविदः
शुभे देशे निवेश्याथ क्षौमवस्त्राभिसंवृताः ७५
शुक्लाम्बरधरः स्रग्वी शुचिर्भूत्वा स्वलंकृतः।
अर्चयेत यथान्यायं गन्धमाल्यैः पृथक् पृथक्
संहितापुस्तकान् राजन्प्रयतः सुसमाहितः।
भक्ष्यैर्माल्यैश्च पेयैश्च कामैश्च विविधैः शुभैः॥
हिरण्यं च सुवर्णं च दक्षिणामथ दापयेत्।
सर्वत्र त्रिपलं स्वर्णं दातव्यं प्रयतात्मना ॥ ७८
तदर्धं पादशेषं वा वित्तशाठ्यविवर्जितम्।
यद्यदेवात्मनोऽभीष्टं तत्तद्देयं द्विजातये ॥ ७९
सर्वथा तोषयेद्भक्त्या वाचकं गुरुमात्मनः।
देवताः कीर्तयेत्सर्वा नरनारायणौ तथा ॥ ८०
ततो गन्धैश्च माल्यैश्च स्वलंकृत्य द्विजोत्तमान्
तर्पयेद्विविधैः कामैर्दानैश्चोच्चावचैस्तथा ॥ ८१
अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः।
प्राप्नुयाच्च क्रतुफलं तथा पर्वणि पर्वणि ॥ ८२
वाचको भरतश्रेष्ठ व्यक्ताक्षरपदस्वरः।
भविष्यं श्रावयेद्विद्वान् भारतं भरतर्षभ ॥ ८३
भुक्तवत्सु द्विजेन्द्रेषु यथावत्संप्रदापयेत्।
वाचकं भरतश्रेष्ठ भोजयित्वा स्वलंकृतम् ८४
वाचके परितुष्टे तु शुभा प्रीतिरनुत्तमा।
ब्राह्मणेषु तु तुष्टेषु प्रसन्नाः सर्वदेवताः ॥ ८५
ततो हि वरणं कार्यं द्विजानां भरतर्षभ।
सर्वकामैर्यथान्यायं साधुभिश्च पृथग्विधैः ८६
इत्येष विधिरुद्दिष्टो मया ते द्विपदां वर।
श्रद्दधानेन वै भाव्यं यन्मां त्वं परिपृच्छसि ॥
भारतश्रवणे राजन्पारणे च नृपोत्तम।
सदा यत्नवता भाव्यं श्रेयस्तु परमिच्छता ८८
भारतं शृणुयान्नित्यं भारतं परिकीर्तयेत्।
भारतं भवने यस्य तस्य हस्तगतो जयः ॥ ८९
भारतं परमं पुण्यं भारते विविधाः कथाः।
भारतं सेव्यते देवैर्भारतं परमं पदम् ॥ ९०
भारतं सर्वशास्त्राणामुत्तमं भरतर्षभ।
भारतात्प्राप्यते मोक्षस्तत्त्वमेतद्ब्रवीमि तत् ९१
महाभारतमाख्यानं क्षितिं गां च सरस्वतीम्
ब्राह्मणान् केशवं चैव कीर्तयन्नावसीदति ॥ ९२
वेदे रामायणे पुण्ये भारते भरतर्षभ।
आदौ चान्ते च मध्ये च हरिः सर्वत्र गीयते
यत्र विष्णुकथा दिव्याः श्रुतयश्च सनातनाः।
तच्छ्रोतव्यं मनुष्येण परं पदमिहेच्छता ॥ ९४
एतत्पवित्रं परममेतद्धर्मनिदर्शनम्।
एतत्सर्वगुणोपेतं श्रोतव्यं भूतिमिच्छता ९५
कायिकं वाचिकं चैव मनसा समुपार्जितम्।
तत्सर्वं नाशमायाति तमः सूर्योदये यथा ९६
अष्टादशपुराणानां श्रवणाद्यत्फलं भवेत्।
तत्फलं समवाप्नोति वैष्णवो नात्र संशयः ॥
स्त्रियश्च पुरुषाश्चैव वैष्णवं पदमाप्नुयुः।
स्त्रीभिश्च पुत्रकामाभिः श्रोतव्यं वैष्णवं यशः
दक्षिणा चात्र देया वै निष्कपञ्चसुवर्णकम्।
वाचकाय यथाशक्त्या यथोक्तं फलमिच्छता
स्वर्णशृङ्गीं च कपिलां सवत्सां वस्त्रसंवृताम्
वाचकाय च दद्याद्धि आत्मनः श्रेय इच्छता
अलङ्कारं प्रदद्याच्च पाण्योर्वै भरतर्षभ।
कर्णस्याभरणं दद्याद्धनं चैव विशेषतः ॥ १
भूमिदानं समादद्याद्वाचकाय नराधिप।
भूमिदानसमं दानं न भूतं न भविष्यति २
शृणोति श्रावयेद्वापि सततं चैव यो नरः।
सर्वपापविनिर्मुक्तो वैष्णवं पदमाप्नुयात् ॥ ३
पितॄनुद्धरते सर्वानेकादशसमुद्भवान्।
आत्मानं ससुतं चैव स्त्रियं च भरतर्षभ ॥ ४
दशांशश्चैव होमोऽपि कर्तव्योऽत्र नराधिप।
इदं मया तवाग्रे च प्रोक्तं सर्वं नरर्षभ ॥ १०५

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां
हरिवंशोक्तभारतश्रवणविधावध्यायः समाप्तः ॥

॥ शुभं भवतु ॥

## ॥ इति स्वर्गारोहणपर्व समाप्तम् ॥

## भारततात्पर्यरूपा भारतसावित्री ।

मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥ १
हर्षस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ २
ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ ३
न जातु कामान्न भयान्न लोभा-
द्धर्मं त्यजेज्जीवितस्यापि हेतोः ।
नित्यो धर्मः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ॥ ४

इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् ।
स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥

॥ इति श्रीमहाभारते *स्वर्गारोहणपर्व समाप्तम् ॥

* यद्यप्यादिपर्वणि पर्वसंग्रहकथनावसरेऽष्टादशे स्वर्गारोहणपर्वणि अध्यायाः पञ्च श्लोकाश्च नवोत्तरे द्विशते इत्युक्तम् । अत्र अध्यायसंख्याविषये नैव वैषम्यं परं श्लोकसंख्यां तु संप्रत्यास्मिन् पर्वणि ३२० एवती दृश्यते । परमयं न्यूनाधिकभावो लेखकादिप्रमादजः स्यादिति भाति ।

अयं ग्रन्थः श्रीकिञ्जवडेकरकुलकमलदिवाकरसोमयाजिदत्तात्रेयदीक्षिततनुज-पण्डितराम-चन्द्रशास्त्रिणा परिशोधितः परिष्कृतश्च । भारती जयतु ॥ शाके १८५४ ॥

